इत्याचार्यैकथास्मेरो नृपतिः प्रेष्य मानुषान् । जटा आनाययत्, तत्र गत्वाऽऽनीताश्च तास्ततः ॥ ६३२ ॥
मुनीन्द्रोऽयं महाज्ञानी कलावपि कलानिधिः । भूपालः कृतपुण्योऽसौ यस्येदृग्गुरुरद्भुतः ॥ ६३३ ॥
पार्षद्या धूतमूर्द्धानस्तद्वृत्तोल्लाससंशिनः । पर्युपास्तिं दधुः सूरिपादान्तभ्रान्तमौलयः ॥ ६३४ ॥

§ १९. अन्यदा सौधमूर्द्धस्थो नृपः कुत्रापि वेश्मनि । कलहान्तरितां रामां भिक्षायै गृहमागतम् ॥ ६३५ ॥
5 जैनभिक्षुं परब्रह्मध्यानैकामहसंमहम् । धृपश्यन्तीमवज्ञातां तेन निर्गच्छता गृहात् ॥ ६३६ ॥
बाढं कपाटमाश्रित्य प्रहारेऽङ्घ्रेः समुद्यते । नूपुरं यतिपादाब्जप्रविष्टं[1] कौतुकादिव ॥ ६३७ ॥
पश्यन्तीमथ सोत्रासां निर्लज्जां कामदामनीम् । गणयत्येप नेत्येवं वदन्तीं च तदैक्षत[2] ॥ ६३८ ॥
—चतुर्भिः कलापकम् ।
प्राकृतस्याथ[3] वृत्तस्य पादमेकमुवाच सः[4] । गुरोरग्रे ततोऽवादीत् [5]स्रागेव पदत्रयम् ॥ ६३९ ॥

10 तच—

**कवाडमासज्ज वरंगणाए अब्भत्थिओ जुव्वणमत्तियाए ।**
**अमन्निए मुक्कपयप्पहारे सनेउरो पव्वइयस्स पाओ ॥ ६४० ॥**

युवा भिक्षाचरोऽन्येद्युः [6]प्रोषितप्रेयसीगृहे । दृष्टः प्रविष्टो भिक्षायै राज्ञा सौधाग्रचारिणा ॥ ६४१ ॥
आनीयान्नभृतां दर्व्वीमूर्द्धाऽस्थात् सा तदास्यदृक् । सोऽपि तन्नाभिसौन्दर्यासक्तनेत्रस्तथा स्थितः ॥ ६४२ ॥
15 एकचित्ततया दानग्रहणा[7]स्मरणात् तदा । *नृपस्तयोरेकदृशोर्ध्यानं पश्यन् जगौ स्मितः ॥ ६४३ ॥

तद्यथा—

**भिक्खयरो पिच्छइ नाहिमंडलं सा वि तस्स मुहकमलं ।**

श्रीबप्पभट्टिराकर्ण्य नृपाग्रे वाक्यमब्रवीत् । किं गण्यानीदृशान्यस्य पयोधेरिव बुद्बुदाः ॥ ६४४ ॥

**दुण्हं पि कवालं चट्टुयं च काया विलुंपंति ॥ ६४५ ॥**

20 श्रुत्वेति भूपतिस्तुष्टः प्राह कल्याणधीनिधिम् । विना मन्मित्रमेते कः पूरयेन्मन्मथेप्सितम् ॥ ६४६ ॥
इत्येवं सत्यसौहार्दमार्दवार्द्दनमीतिभूः । गुरुवक्त्राम्बुजे नित्यं भृशं भृङ्गीतुलां व्यधात् ॥ ६४७ ॥

§ २०. एकदा समगादेकच्छेको विश्वकलाश्रयः । चित्रकृच्चित्रकृच्चित्रकर्म्मकर्म्मणि कर्मठः ॥ ६४८ ॥
पूर्वमालिखितं सम्यक् ततः[8] कर्पटवारितम् । रेखितं[9] रङ्गिवर्णौघपूर्णक्षणमथ स्फुटम् ॥ ६४९ ॥
अलक्ष्यमपि[10] मा चित्रभङ्गे जीववधो[11] ध्रुवः । इति सत्यापयन्[12] वाचं सजीवकलया स्वया (?) ॥६५०॥
25 स त्रयोदशभिर्भागैर्भूपरूपं विधाय तत् । चित्रचूडामणिं राज्ञो दर्शयन् विकटे पटे ॥—त्रिभिर्विशेषकम् ।
राजा सुहृद्गुणग्रामरामणीयकलम्पटः । अनास्थया समीक्ष्यास्य ददौ नोत्तरमप्यसौ ॥ ६५२ ॥
एवं त्रिर्विहिते रूपे यदा नोत्तरमाप सः । अवोचत् प्रेक्षकानन्यान् निर्वेदादतिदीनगीः ॥ ६५३ ॥

---

1 N प्रविष्टं । 2 A तदैक्ष्यते; B तदैक्षत । 3 N प्राकृतस्याथ । 4 A च । 5 N प्रागेव । 6 N प्रेषितः । 7 A °ग्रहण स्मरणा° ।

* N पुस्तके "नृपस्तयोरेकदृशोर्ध्याने दृष्टेऽथवायसैः ॥
विकीर्णे सकलेऽप्यन्ने विस्मयस्मेरलोचनः । गाथार्द्धमूचिवांस्तत्र यथा दृष्टार्थवाचकम् ॥
ध्यानं पश्यन् जगौ स्मिताः–" एतादृशः पाठविशेषोऽत्र दृश्यते ।

8 N सम्यक् ततः; A सम्यक् तव । 9 N रेखितं । 10 A अलक्ष्यमति मां; B अलक्ष्म । 11 N °वधाद् । 12 A सत्यापयन्ता··· ।

छिनद्मि स्वौ करौ किं वा ललाटं स्फोटये निजम्। कला यातु क्षयं भाग्यहीनस्य मम किं ब्रुवे ॥ ६५४ ॥
बप्पभट्टिं समीक्षस्वेत्युक्तः कैश्चिद्दयालुभिः। ततोऽसौ गुरवे जैनं बिम्बं कृत्वा करे ददौ ॥ ६५५ ॥
प्राशंसि च ततोऽसौ तैरेष चित्रकलानिधिः। भूपालाग्रेऽथ[1] सोऽप्यस्य टंकलक्षं ददौ मुदा ॥ ६५६ ॥
श्रीवर्द्धमानबिम्बेन भास्वत्पटचतुष्टयम्। न्यधापयदधाद्येकं कन्यकुब्जपुरान्तरा ॥ ६५७ ॥
मथुरायां तथैकं चाणहिल्लपुर एककम्। सतारकपुरे चैकं प्रतिष्ठाप्य न्यधापयत् ॥ ६५८ ॥
श्रीपत्तनान्तरा मोढचैत्यान्तर्म्लेच्छभङ्गतः। पूर्वमासीत् तमैक्षन्त तदानीं तत्र धार्मिकाः ॥ ६५९ ॥
द्वापंचाशत् प्रबन्धाश्च कृतास्तारागणादयः। श्रीबप्पभट्टिना शैक्षकविसारस्वतोपमाः ॥ ६६० ॥

§२१. अथ राजगिरिं दुर्गमन्यदा रुरुधे नृपः। समुद्रसेनभूपालाधिष्ठितं निष्ठितद्विपत्[2] ॥ ६६१ ॥
गजाश्वरथपादातपाद[3]पातादिसादितैः। शब्दाद्वैतमिव व्योम्नि प्रतितिष्ठत्[4] समुन्नतम् ॥ ६६२ ॥
समग्रप्राग्[5]सामग्रीजाग्रद्‌व्यग्रपरिग्रहम्। अपि प्रपंचलक्षाभिर्दुर्ग्रहं विग्रहिद्विपाम्[6] ॥ ६६३ ॥
भैरवादिमहायन्त्रयष्टिमुक्ताश्मगोलकैः। बाह्यकुट्टिमकुट्टाकैः कुट्टिताट्टपटातटम् ॥ ६६४ ॥
अभ्रंलिहट्टपद्धित्तिशिरस्थकपिशीर्षकैः। सर्द्धिवैः छन्नसंचारं रवेस्तारापतेरपि ॥ ६६५ ॥
सुरंगा[7]शूकरीमुख्यप्रपंचैरपि विद्विषाम्। पतत्युष्णतैलौघस्पृष्टैर्निष्फलविक्रमम् ॥ ६६६ ॥—षड्भिः कुलकम्।
पप्रच्छ बप्पभट्टिं च निर्वेदादामभूपतिः। कथं कदा वा ग्राह्योऽयं प्राकारः क्ष्माधरोपमः ॥ ६६७ ॥
प्रश्नचूडामणेः शास्त्रात् [8]सुविचार्याब्रवीदिति। पौत्रस्ते भोजनामाऽमुं ग्रहीष्यति न संशयः ॥ ६६८ ॥
अभिमानादसोढेदं राजा तत्रैव तस्थिवान्। वर्षैर्द्वादशभिर्दुन्दुकस्य सूनोः सुतोऽजनि ॥ ६६९ ॥
स च पर्यंकिकान्यस्तः प्रधानैर्जातमात्रकः। आनिन्ये तस्य दम्भोलिरिव शैलच्छिदाविधौ ॥ ६७० ॥
तद्दृष्टिर्दुर्गशृङ्गाग्रे मुखं बालस्य तन्मुखम्। विधायापात्यतापितातैलज्वालाविलासिरुक् ॥ ६७१ ॥
स कोट्टः कुट्टिताधस्थरणमण्डपमण्डलः। स्फुटदट्टालकस्तोमभ्रश्यद्गोपुरादपि ॥ ६७२ ॥
मृद्यमानमनुष्यस्त्रीगजाश्वमहिषीगवाम्। आर्त्ताक्रन्दरवैः शब्दाद्वैतं सर्वत्र पोषयन् ॥ ६७३ ॥
निर्घातक्षुण्णसामान्यपर्वतो महतामपि। गिरीणां प्रददद्भीतिं न्यपतन्नाकिलोकिनः ॥ ६७४ ॥—त्रिभिर्विशेषकम्।
समुद्रसेनभूपोऽपि धर्मद्वाराद् ययौ बहिः। आमनामाथ भूपालः श्रीराजगिरिमाविशत्[9] ॥ ६७५ ॥
अधिष्ठाता तु दुर्गस्य यक्षोऽङ्गीकृतवैरतः। आमाधिष्ठायिकैः रुष्टः प्रतोलीस्थो[10] हि तज्जनम् ॥ ६७६ ॥
इति लोकात् परिज्ञाय राजा तत्रागमत् तदा। तमाह प्राकृतं लोकं मुक्त्वा मामेव घातय ॥ ६७७ ॥
इति साहसवाचा स तुष्टो हिंसाग्रहात् ततः। न्यवर्त्तत प्रशान्तात्मा सत्संग उपकारकः ॥ ६७८ ॥
मैत्रीं च प्रतिपेदे स यथादिष्टकरः प्रभोः। कियन्मे जीवितं मित्र! ज्ञानाद्दृष्ट्वा निवेदय ॥ ६७९ ॥
षण्मास्यामवशेषायां कथयिष्यामि तत्र च। इति जल्पन् तिरोधत्तावसरे च तदब्रवीत् ॥ ६८० ॥
गंगान्तर्मागधे तीर्थे नावाऽवतरतः सतः। मकाराद्यक्षरग्रामोपकण्ठे मृत्युरस्ति ते ॥ ६८१ ॥
निर्यद्धूमं जलाद्दृष्ट्वाभिज्ञानं भवता दृढम्। विज्ञेयमुचितं यत्ते तत्प्रेत्यार्थं समाचर ॥ ६८२ ॥

§२२. तीर्थयात्रामसौ मित्रोपदेशादुपचक्रमे। अलसः को हिते स्वस्य नेच्छेत् सद्गतिमात्मनः ॥ ६८३ ॥
प्रयाणैः प्रवणैः पुण्डरीकाद्रिं प्राप भूपतिः। युगादिनाथमभ्यर्च्य कृतार्थं स्वममन्यत ॥ ६८४ ॥
ययौ रैवतकाद्रिं च श्रीनेमिं हृदि धारयन्। उपत्यकाभुवं प्राप प्राग्भरेस्तः सुधीषु यः ॥ ६८५ ॥
तीर्थं प्रणन्तुमानेकानेकादश नरेश्वरान्। अपश्यत्स्मयदातङ्को हयायुतपरिच्छदान् ॥ ६८६ ॥

---

1 A भूपालाग्रेपि। 2 N B °द्विपन्। 3 A °पादापातादि°। 4 A प्रतिविष्ठन्। 5 N °प्राज्य°। 6 A विग्रहद्विषां।
7 A °सूकरी°। 8 A स विचा°। 9 A °माविशत्। 10 N कूटप्रतोलीस्थायिनं जनम्।

तथैकादशभिः फल्गुवाग्डम्बरदिगम्बरैः । राक्षसैरिव शाखोटान् कलिनिघ्नैरधिष्ठितान् ॥६८७॥—युग्मम् ।
स्वीकुर्वाणान्महातीर्थं शैलारोहनिषेविनः । असंख्यसैन्यसंख्याय तानाह्वयदिलापतिः ॥ ६८८ ॥
तान् दृष्ट्वा बप्पभट्टिः श्रीसुहृद्भूपालमब्रवीत् । धर्मकर्मोद्यमे युद्धात् प्राणिनः को जिघांसति ॥ ६८९ ॥
वागाहवेन जेष्यामि विद्वत्पाशानिमान् नृप ! । नखच्छेद्येऽब्जिनीखण्डे कुठारं कः प्रयोजयेत् ॥ ६९० ॥
ते जिता वादमुद्रायाममुद्रायासमन्तरा । दीपस्य शलभप्लोषे[1] स्तुतिः संस्तूयते हि का ॥ ६९१ ॥
ततोऽपि तानभ्यमित्रानवादीद् विशदाम्बरः[2] । निर्जयादपि[3] चेद् यूयं शमिनो न प्रतादपि ॥ ६९२ ॥
असंख्यव्यन्तराधीशचुम्बितांह्रिनखावलिः । अम्बा श्रीनेमिपादाब्जकादम्बा शासनामरी ॥ ६९३ ॥
आत्मनोरुभयोः कन्यायुग्मं न्यस्यतः स्थितम् । देवी तदन्तरा येषामेतां[4] संजल्पयिष्यति ॥ ६९४ ॥
तीर्थं तदीयमेवास्तु यस्याम्बा क्रमतोऽमुतः । समर्पयति तत्किं नु वादैरादीनवास्पदैः ॥६९५॥—विशेषकम् ।
उभयाभिमतो जज्ञे व्यवहारोऽयमेतयोः । पक्षयोरक्षयोदग्रप्रभावाम्बालये ततः ॥ ६९६ ॥
ततः कुमारिकां तेषां बप्पभट्टिरिहार्पयत् । द्वादशप्रहरान् यावत्तैर्मन्त्रैः साधिवासिता ॥ ६९७ ॥
एडमूकेव[5] नाह स्म कथंचिदथ तेऽवदन् । शक्तिश्चेद् यूयमप्यत्र कन्यां जल्पयताद्य नः ॥ ६९८ ॥
तन्मूर्ध्नि बप्पभट्टिश्च करं कमलकोमलम् । ददावम्बा च तद्वक्त्रे स्थिता स्पष्टमुवाच च ॥ ६९९ ॥

उज्जिंतसेलसिहरे दिक्खा-नाणं निसीहिया जस्स ।
तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ७०० ॥

ततो जयजयध्वानमिश्रो दुन्दुभिरध्वनत् । रोदःकुक्षिंभरिः श्वेताम्बरपक्षोन्नतिप्रदः ॥ ७०१ ॥
ततः प्रभृति गाथेयं चैत्यवन्दनमध्यतः । सिद्धस्तवनकद्गाथात्रितयादूर्ध्वमादृता ॥ ७०२ ॥
शक्रस्तवदाबालाङ्गनापाठ्याऽत्र मानिता । अष्टापदस्तुतिश्चापि श्रुतवृद्धैः पुरातनैः ॥ ७०३ ॥
ततो रैवतकारोहात् समुद्रविजयाङ्गजम् । आनर्चासौ महाभक्त्या[6] मानयन् जन्मनः फलम् ॥ ७०४ ॥
दामोदरहरिं तत्राभ्यर्च्यागात् पिंडतारके । तथा माधवदेवे च शंखोद्धारे च तं स्थितम् ॥७०५॥
द्वारकायां ततः श्रीमान् कृष्णमूर्तिं प्रणम्य च । तत्र दानादि दत्त्वा श्रीसोमेश्वरपुरं ययौ ॥ ७०६ ॥
ततः श्रीसोमनाथस्य हेमपूजापुरस्सरम् । तल्लोकं प्रीणयामास वासवो जीवनैरिव ॥ ७०७ ॥
पुनः[7] स्वं नगरं प्राप श्रीमानाममहीपतिः । यादृच्छिकं ददौ दानं धर्मस्थानानि च व्यधात् ॥ ७०८ ॥

§ २३. प्राप्ते काले सुतं राज्ये दुन्दुकं स न्यवेशयत् । प्रकृतीः क्षमयामास पूर्वमानन्दिता अपि ॥ ७०९ ॥
प्रयाणं दत्तवान् गंगासरित्तीरस्थमागधम् । तीर्थं जिगमिषुर्नावमारूढश्च तदन्तरा ॥ ७१० ॥
सूरिणा सह तन्मध्ये दृष्टवान् धूमनिर्गमम् । उपगंगं जनाज्जज्ञे मगटोडानिवेशनम् ॥ ७११ ॥
प्रतीते व्यन्तराख्याते सूरिराहाऽऽमभूपतिम् । जैनधर्मं प्रपद्यस्व प्रान्तेऽपि प्रत्ययोऽस्ति चेत् ॥ ७१२ ॥
राजाह प्रतिपन्नोऽस्मि सर्वज्ञः शरणं मम । देवो गुरुर्ब्रह्मचारी धर्मश्चेन् कृपयोदितः ॥ ७१३ ॥
देवो गुरुश्च धर्मश्च यश्चक्रे व्यावहारिकः । इयद्दिनानि सोऽत्याजि मया त्रिविधशुद्धितः ॥ ७१४ ॥
मम सौहार्दतः पूज्यपादानामपि सांप्रतम् । विधिवद्रिमहत्याग इह वो नोचिता स्थितिः ॥ ७१५ ॥
परत्रापि यथा लोके समस्यापूरणादिभिः । कालोऽतिवाह्यते सौख्यान्मिलितैरेव निश्चितम् ॥ ७१६ ॥
श्रुत्वेत्याह प्रभुर्मुग्धवागियं स्वस्वकर्मभिः । करकः कां कां गतिं गन्ता बुध्यते को जिनं विना ॥ ७१७ ॥

1 A शलभप्लोषे । 2 N A °विशदांबरः । 3 A निर्णयादपि । 4 A येषामेतां । 5 A एकमूकेव । 6 N महाभक्तो । 7 N A पुरः ।

युक्तमेतद् व्रतस्थानां नात्मप्राणापरोपणम् । तथातः पञ्चवर्षाणि ममाद्याप्यायुरस्ति च ॥ ७१८ ॥

विक्रमतो वर्षाणां शताष्टके सनवतौ च भाद्रपदे ।
शुक्ले सितपञ्चम्यां चन्द्रे चित्राख्यऋक्षस्थे ॥ ७१९ ॥

तुलाराशौ तथा चन्द्रस्थिते[1]ऽर्के प्रहरेऽन्तिमे । श्राव्यमाणो भृशं पञ्चपरमेष्ठिनमस्क्रियाम् ॥ ७२० ॥

दृढं जिनेशसन्मित्रगुरुपादस्मृतिस्थितः ।
श्रीमान् नागावलोकाख्यो राजा प्राप दिवं तदा ॥ ७२१ ॥–विशेषकम् ।

अथ किंचित्सुहृन्मोहात् तत्र स्थित्वौर्ध्वदेहिकम् । कारयामास पार्श्वस्थः प्रधानैस्तत्सनाभिभिः ॥ ७२२ ॥
किंचिच्छोकोर्मिसन्तप्त उवाच करुणं तथा । सोद्वेगं च तदीयानां गुणानां संस्मरन् भृशम् ॥ ७२३ ॥

मा भूत् संवत्सरोऽसौ वसुशतनवतेर्मा च ऋक्षेषु चित्रा
धिग्मासं तं नभस्यं क्षयमपि स खलः शुक्लपक्षोऽपि यातु ।
संक्रान्तिर्या च सिंहे विशतु हुतभुजं पञ्चमी या तु शुक्ले
गंगातोयाग्निमध्ये त्रिदिवमुपगतो यत्र नागावलोकः ॥ ७२४ ॥

§ २४. अथ श्रीबप्पभट्टिश्च कन्यकुब्जे मुनीश्वरः । प्राप दुन्दुकभूपालाधिष्ठितं तन्निरुद्यमः ॥ ७२५ ॥
सक्तः कंट्याख्यवेश्यायां भूपो भोजं निजं सुतम् । भाग्योदयकलाकेलिविलासमपि पापभूः ॥ ७२६ ॥
अभिद्रुह्यति मूढस्तद्वाग्भिर्विगतचेतनः । अविवेकधराधुर्यं धिग् वेश्याजनसंगमम् ॥ ७२७ ॥–युग्मम् ।
तन्माता निजबन्धूनां ज्ञापयामास दुःखिता । संकटे हि कुलस्त्रीणां शरणं शरणं पितुः ॥ ७२८ ॥
समागत्याह्वयंस्ते च पुत्रजन्मोत्सवच्छलात् । आपृच्छायै पुनर्भोजः संचचार नृपालये ॥ ७२९ ॥
ज्ञापितो गुरुभिः सौधद्वारे[2] विज्ञाय शस्त्रिणः । निवृत्तो[3] मातुलैः साकं प्रययौ पाटलीपुरम् ॥ ७३० ॥
आचार्यमन्यदा राजा दुन्दुकः प्राह मत्सरी । मयि प्रसादमाधायानीयतां नन्दनोत्तमः ॥ ७३१ ॥
ततः स ध्यानयोगादिप्रारम्भैरुत्तरोत्तरैः । वाहयामास वर्षाणि पंच[4] पंचत्ववासरम् ॥ ७३२ ॥
ततोऽन्त[5]समये प्राप्ते राज्ञा[6] दृढतरं गुरुः । उपरोध्य सुताह्वानहेतवे प्रैष्यतादरात् ॥ ७३३ ॥
ययौ तन्नगराभ्यासे विममर्श च चेतसि । चेद् भोजो नीयते यस्मात् तन्नृपेण स हन्यते ॥ ७३४ ॥
नोचेत् कंटिकया बाढं मूर्खोऽसाविति संहितः । शिष्याणां विद्रवैः कर्त्ता शासनस्याप्रभावनाम् ॥ ७३५ ॥
सांप्रतं सांप्रतं मृत्युस्तस्मात् प्रायोपवेशनान्[7] । तत्र कृत्वातिगीतार्थकारिताराधनादृतः ॥ ७३६ ॥
स्वयमध्यात्मयोगेन दिनानामेकविंशतिः । अतिवाह्य क्षुधा-तृष्णा-निद्रादिद्वेषिविग्रही ॥ ७३७ ॥
आत्मानं दशमद्वाराभिरवासयदुद्यतः । ईशाने नाकितां प्राप बप्पभट्टिर्मुनीश्वरः ॥७३८॥–विशेषकम् ।

विक्रमतः शून्यद्वयवसुवर्षे[8] ( ८०० ) भाद्रपदतृतीयायाम् ।
रविवारे हस्तर्क्षे जन्माभूद् बप्पभट्टिगुरोः ॥ ७३९ ॥
षड्वर्षस्य व्रतं चैकादशे वर्षे च सूरिता[9] ।
पंचाधिकनवत्या च प्रभोरायुः समर्थितम् ॥ ७४० ॥
शर-नंद-सिद्धिवर्षे ( ८९५ ) नभःशुद्धाष्टमीदिने ।
स्वातिभेऽजनि पंचत्वमामराजगुरोरिह ॥ ७४१ ॥

---

1 B चन्द्रस्थितो । 2 A द्वारि । 3 निर्वृत्तो । 4 A पंचापंच° । 5 N ततोथ सम° । 6 N राजा । 7 N °वेशने ।
8 A °वर्षैः । 9 N सूरिणा ।

इत्याकर्ण्यामराजस्य पौत्रोऽतिस्फारशोकभूः । भोजः संकुचिताम्भोजवदनं विललाप च ॥ ७४२ ॥
विवेकौघो[1]ऽविवेकेन जितः[2] सारस्वतं हृतम्[3] । अनुत्सेकस्तिरोधत्त ज्ञाने दत्तो जलांजलिः[4] ॥ ७४३ ॥
इति क्षणं विमृश्यासावादिदेश चिताकृते । प्रेष्यानदूष्यचारित्रो गुरुभक्तिपवित्रितः ॥ ७४४ ॥
पितामहवियोगेऽपि वर्द्धितस्तस्य मित्रतः । अनाथ इव लोकेऽत्र तत्रापि त्रिदिवं गते ॥ ७४५ ॥
5 ततः क्षणमपि स्थातुं न शक्तः पृथिवीतले । पितृवत्सुहृत्सूरेरनुव्रज्याऽधुनोचिता ॥ ७४६ ॥
मातृपक्षप्रधानानां बोधं चावगणय्य सः । गुरुमृत्युभुवं[5] प्राप गन्ता लीलावने यथा ॥ ७४७ ॥
भुजदण्डे जनन्या च धृत्वाऽश्वाजल्पि तत्क्षणम् । निर्वीरात्वनिषेधाय राज्यस्य कृपयापि च ॥ ७४८ ॥
श्वसुरद्वयसंहारे जाते ते विद्विषन् पिता । जितंमन्यो महापापी त्वत्प्रजाः पीडयिष्यति ॥ ७४९ ॥
हृदयालुः कृपालुश्च तत् त्वं प्रार्थनया मम । कर्मतो विरमायुष्मात् हृदानन्दन नन्दन[7] ! ॥ ७५० ॥
10 इति मातुरलंघ्यत्वात् श्रीभोजः साश्रुलोचनः । उत्तरीयं निचिक्षेप चितायां गुरुपृष्ठतः ॥ ७५१ ॥
अस्तोकशोकसम्भारधारणक्लान्तदेहरुक् । ऊ(औ ?)र्द्धदेहिकमाधत्त कृत्यं[8] पैतामहं प्रभोः ॥ ७५२ ॥

§ २९. अन्यदा मातुलैः साकमाकस्मिकदवोपमः । तातं शमयितुं मायात् कन्यकुब्जजनान्वितः ॥ ७५३ ॥
प्रविष्टो[9] गोपुरेणाथ द्राग् राजद्वारसंनिधौ । मालाकारं ददर्शाथ बीजपूरत्रयान्वितम् ॥ ७५४ ॥
तेन ढौकनकं[10] स्वामिपुत्रस्यास्य कृतं तदा । तं गृहीत्वा ययावन्तःसौधं रोधं विशन् विशाम्[11] ॥ ७५५ ॥
15 सह कंटिकया तत्रोपविष्टं प्रवरासने । जघान हृदये घातैस्त्रिभिस्तैर्बीजपूरकैः ॥ ७५६ ॥
महाप्राणकृताघातादुभौ प्राणैर्वि(र्व्य)युज्यताम् । प्रागुप्यातपुत्रहत्यांहोभीतैरिव विनिर्गतैः ॥ ७५७ ॥
अपद्वाराद् बहिः कृष्टा[12] कोष्टारमिव वेश्मनः । दुन्दुकं कन्दुकस्थित्या क्रीडया प्रेरितं[13] नरैः ॥ ७५८ ॥
निस्वानस्वानपूर्वं सोऽविशत् कंठीरवासने । प्रणतः सर्वसामन्तैः [14]सपौरैर्मंत्रिभिस्तथा ॥ ७५९ ॥
श्रीमदामविहाराख्यतीर्थे नन्तुं ययौ नृपः । तत्र शिष्यद्वयं दृष्टं बप्पभट्टेर्महामुनेः[15] ॥ ७६० ॥
20 विद्याव्याक्षेपतस्ताभ्यां न चक्रे भूमिपोचितम् । अभ्युत्थानादिसन्मानं श्रीभोजोऽथ व्यचिन्तयत् ॥७६१॥
अज्ञातव्यवहारो हि शिष्यावेतौ प्रभोः पदे । न युज्येते यतो विश्वे व्यवहारो महत्वभूः ॥ ७६२ ॥
श्रीनन्नसूरिराचार्यः श्रीमान् गोविन्द इत्यपि । आहूय पूजितौ राज्ञा पट्टे च स्थापितौ प्रभोः ॥ ७६३ ॥
मोढेरे प्रहितो नन्नसूरिः सूरिगुणोन्नतः[16] । पार्श्वे गोविन्दसूरिश्चावस्थाप्यत नृपेण तु ॥ ७६४ ॥
भोजराजस्ततोऽनेकराज्यराष्ट्रमहामहः[17] । आमादभ्यधिको जज्ञे जैनप्रवचनोन्नतौ ॥ ७६५ ॥
25 वप्पभट्टिर्भद्रकीर्त्तिर्वादिकुञ्जरकेसरी ।
ब्रह्मचारी गजवरो राजपूजित इत्यपि ॥ ७६६ ॥
विख्यातो विरुदैर्जैनशासनक्षीरसागरे । कौस्तुभः[18] कृतसंस्थानः पुरुषोत्तमवक्षसि ॥ ७६७ ॥
जयताज्जगतीपीठे धर्मकल्पद्रुमाङ्कुरः । इदानीमपि यन्नाममन्त्रो जाड्यविषापहः ॥७६८॥—त्रिभिर्विशेषकम् ।

---

1 A विवेकौघो । 2 A जितसार° । 3 N हितं । 4 A जलांजलि । 5 N पितृवत्सु । 6 A गुरुमृत्युभुवं । 7 A नन्दनः । 8 A कृतं । 9 N प्रतिष्ठो । 10 A ढौकनके । 11 N दिशलिशाम् । 12 A कृत्वा । 13 N प्रेषितं । 14 A सपूरे° । 15 A महामतिः, B महामति । 16 N सूरिगणो° । 17 N राज्यभ्रष्टमहमहः । 18 A B कौस्तुभकृतसंस्थान° ।

२८९

इत्थं श्रीबप्पभट्टिप्रभुचरितमिदं विश्रुतं विश्वलोके
प्रागविद्वत्ख्यातशास्त्रादधिगतमिह यत् किंचिदुक्तं तदल्पम् ।
पूज्यैः क्षन्तव्यमत्रानुचितमभिहितं यत्तथा तत्प्रसादात्
एतत्सर्वाभिगम्यं भवतु जिनमतस्थैर्यपात्रं ध्रुवं च ॥ ७६९ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीराममलक्ष्मीभुवा । 5
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीबप्पभट्टेः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः किलैकादशः ॥ ७७० ॥

दुष्कर्मजैत्रः पुरुषोत्तमाङ्गाज्जन्माविशुद्धाक्षरहेतुमूर्तिः ।
गिरीशतुङ्गाध्वपुरःस्थितश्रीः प्रद्युम्नदेहः शिवतातिरस्तु ॥ ७७१ ॥ 10

श्रीकन्यकुब्जक्षितिपप्रबोधकर्तुस्तथा पूर्वगतश्रुतेन ।
विश्वे समस्तानवपाठवन्द्यैः श्रीमद्रकीर्तेर्नरिनर्ति कीर्त्तिः* ॥ ७७२ ॥

॥ ग्रंथाग्र० ८२०, † उभयं २९४० ॥

---

* A आदर्शे नोपलभ्यते पद्यमिदम् । † B आदर्शे इयं संख्या '८४०,' तथा '२९६०' प्रमिता ।

परिशिष्ट : १.

## ९. अथ श्रीबप्पभट्टिसूरिप्रबन्धः ।

15 § ३८) गूर्जरदेशे पाडलापुरनगरे जितशत्रू राजा राज्यं करोति स्म । तत्र* श्रीसिद्धसेननामा सूरीश्वरोऽस्ति स्म । स मोढेरपुरे महास्थाने श्रीमहावीरनमस्करणाय गतः । श्रीमहावीरं नत्वा तीर्थो-[illegible] कृत्वा रात्रावात्मारामरतो योगनिद्रया स्थितः सन् स्वप्नं ददर्श । यथा–केसरिकिशोरको देवगृहोपरि क्रीडति । स्वप्नं लब्ध्वाऽजागरीत् । माङ्गल्यस्तवनान्यपाठीत् । प्रातश्चैत्यं गतः । तत्र षड्वार्षिको बाल एको बालांशुमालिसमद्युतिराजगाम । सूरिणा पृष्टः–भो अर्भक ! कस्त्वम् ? 20 कुत आगतः ? । तेनोक्तम्–पञ्चालदेशे डुंबाउधीग्रामे बप्पाख्यः क्षत्रियः । तस्य भट्टिर्नाम सधर्म-चारिणी । तयोः 'सूरपालो नाम पुत्रोऽहम् । मत्तातस्य बहवो भुजबलगर्विताः प्रचुरपरिच्छदाः शत्रवः सन्ति । तान्सर्वान्हन्तुमहं सन्नह्य चलन्नासम् । पित्रा निषिद्धः–वत्स ! बालस्त्वम्, नास्मै कर्मणे प्रगल्भसे । अलमुद्योगेन । ततोऽहं क्रुद्धः । किमनेन निरभिमानेन पित्रापि, यः स्वयमरीन्न हन्ति मामपि घ्नन्तं निवारयति । अपमानेन मातापितरावनापृच्छ्यात्र समागतः । 25 सूरिणा चिन्तितम्–अहो दिव्यं रत्नम् ! । न मानवमात्रोऽयम् । 'तेजसां हि न वयः समीक्ष्यते ।' इति विमृश्य बाल आलेपे–वत्सक ! अस्माकं पार्श्वे तिष्ठ, निजगृहाधिकसुखेन । बालेनोक्तम्–महान्प्रसादः । स्वस्थानमानीतः । सङ्घो हृष्टस्तद्रूपविलोकनेन । दृष्टयस्तस्मिं न 'मन्वते । पाठ-यित्वा विलोकितः । एकाहेन श्लोकसहस्रमध्यगीष्ट । गुरवस्तुतुषुः' । 'रत्नानि पुण्यप्रचयप्राप्याणि ।' धन्या वयम् । तेन बालेनाप्यल्पदिनैर्लक्षण-तर्क-साहित्यादीनि भूयांसि शास्त्राणि पर्यशीलिषत ।

---

* एषा कोष्टकगता पंक्तिः केवलं P पुस्तके दृश्यतेऽतः प्रक्षिप्तप्राया प्रतिभाति । 1 P यातान् । 2 P बाले सितो । 3 P समजनि । 4 B सिद्धिकरिणा । 5 P पाटला० । 6 B अत्र । 7 B सुर० । 8 B सम्यन्ते; P सन्यते । 9 C तुतुषः; D तुषाः; P तुहुषुः ।

ततो गुरवो डुंबाउधीग्रामं जग्मुः । बालस्य पितरौ वन्दितुमागतौ । गुरुभिरालापितौ–पुत्रा [illegible] भूयांसोऽपि । किं तैः संसारावकरकृमिभिः[1] ? । अयं तु युवयोः पुत्रो व्रतमीहते । दीयतां [illegible] । गुरूणां धर्मः । 'नष्टं मृतं सहन्ते हि पितरो निजतनयम् ।' श्लाघ्योऽयं भवं निस्तितीर्षुः । पितृभ्यामुक्तम्–भगवन् ! अयमेक एव नः कुलतन्तुः । कथं दातुं शक्यते ? । तावता सविधस्थेन सूरपालेन गदितम्–अहं चारित्रं गृह्णाम्येव । 5

६१. यतः–सा बुद्धिर्विलयं प्रयातु कुलिशं तत्र श्रुते[3] पात्यताम्, वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः ।
यैः सर्वैः शरदेन्दुकुन्दविशदैः प्राप्तैरपि प्राप्यते, भूयोऽप्यत्र पुरन्ध्रिरन्ध्रनरकक्रोडाधिवासव्यथा ॥ १ ॥

ततो ज्ञाततन्निश्चयाभ्यां तन्मातापितृभ्यां जल्पितम्–भगवन् ! गृहाण पात्रमेतत् । परं 'बप्पभट्टिः' इति नामास्य कर्तव्यम् । गुरुभिर्भणितम्–एवमस्तु । कोऽत्र दोषः । पुण्यवन्तौ युवाम् । ययोरयं लाभः सम्पन्नः । बप्प-भट्टी आपृच्छय सूरपालं गृहीत्वा सिद्धसेनाचार्या मोढेरकं गताः । 10

६२. शताष्टके वत्सराणां गते विक्रमकालतः । सप्ताधिके राधशुक्लतृतीयादिवसे गुरौ ॥ २ ॥

दीक्षा दत्ता । 'बप्पभट्टिः' इति नाम विश्ववल्लभं जुघुषे । सङ्घप्रार्थनया तत्र चतुर्मासकं कृतम् ।

§३६) अन्यदा बहिर्भूमिं गतस्य बप्पभट्टेर्महतीं वृष्टिमतनिष्ट घनः । क्वापि देवकुले स्थितः सः । तत्र देवकुले महाबुधः[4] कोऽपि पुमान् समागतः । तत्र देवकुले प्रशस्तिकाव्यानि रसाढ्यानि गम्भीरार्थानि तेन बप्पभट्टिपार्श्वाद्व्याख्यापितानि । ततः स बप्पभट्टिना समं वसतिमायातः । गुरु- 15 भिराशीर्भिरभिनन्दितः । आम्नायं स पृष्टः । ततोऽसौ जगाद–भगवन् ! कन्यकुब्जदेशे गोपालगिरिदुर्गनगरे यशोवर्मनृपतेः[5] सुयशादेवीकुक्षिजन्मा[6] नन्दनोऽहम् । यौवने[8] च निरर्गलं धनं लीलया व्ययन् पित्रा कुपितेन शिक्षितः–वत्स ! धनार्जकस्य कृच्छ्रमस्थानव्ययी पुत्रो न वेत्ति तातस्य । मितव्ययो भव । ततोऽहं कोपादिहागमम् । गुरवोऽप्यूचुः–किं ते नाम ? । तेनापि खटिकया भुवि लिखित्वा दर्शितम्–'आम' इति । महाजनाचारपरंपरेदृशी 'स्वनाम नामादवते न साधवः ।' 20 तस्यौन्नत्येन गुरवो हृष्टाः । चिन्तितं च तैः–पूर्वं श्रीरामसैन्ये[9] दृष्टोऽसौ पाण्मासिकः शिशुः ।

६३. पीलुवृक्षमहाजाल्यां[10] वस्त्रान्दोलकमाश्रितः[11] । अचल[या]च्छायया च पुण्यपुरुषो निर्णीतः ॥ ३ ॥

ततस्तज्जननी वन्यफलानि विचिन्वानाऽस्माभिर्भणिता–वत्से ! का त्वम् ? । किं च[12] ते कुलम् ? । [*साऽवादीत् निजं कुलम्] अहं राजपुत्री कन्यकुब्जेशयशोवर्मपत्नी सुयशा नाम । अहमस्मिन्सुते गर्भस्थे राति दृढकार्मणवशीकृतधवया कृतप्रमाणयाऽकृत्ययेव क्रूरया सपत्न्या 25 मिथ्या परपुरुषदोषमारोप्य गृहान्निष्कासिता । अभिमानेन श्वशुरकुल-पितृकुले हित्वा भ्रमन्तीह समागता वन्यवृत्त्या जीवामि । बालं च पालयामि । इदं श्रुत्वाऽस्माभिः सा उक्ता–वत्से ! अस्मच्चैत्यं समागच्छ । स्वं वत्सं प्रवर्द्धय[13] । तया तथा कृतम् । सपत्न्यपि बहुसपत्नीकृतमारणप्रयोगैः[14]-र्नेमार । ततो विशिष्टपुरुषैः कन्यकुब्जेशो यशोवर्मा विज्ञप्तः–देव ! सुयशा राज्ञी निर्दोषाऽपि तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्यानीयते । राज्ञा सा स्वसौधमानायिता सपुत्रा 30 गौरविता च ।

---

1 A कृतिभिः । 2 P नास्ति । 3 A श्रुतः । 4 B महाबोधः । 5 C यशोधर्म° । 6 P सुयशो° । 7 'कुक्षि' नास्ति । 8 CP यौवनेन । 9 PC °सैन्ये ग्रामे । 10 P महाजल्यां । 11 P वस्त्रदोलक° । 12 BC दा तव । * PC आदर्शे एवैष पाठः । 13 PC वत्कृत° । 14 C वर्धय । 15 PC प्रयोगेण ।

२८९

अन्यदा विहरन्तो वयं तस्या देशं गताः। तया पूर्वप्रतिपन्नं स्मरन्त्या वयं वन्दिताः पूजिताः। अनेन आमनाम्ना तत्सुतेन भाव्यम्। एवं चिरं विभाव्य सूरयस्तमूचुः-वत्स! वस निश्चिन्तो निजेन सुहृदा बप्पभट्टिनाम्ना सममस्मत्सन्निधौ। त्वं गृहाण कलाः। कास्ताः?-लिखितम् १. गणितम् २. गीतम् ३. नृत्यम् ४. पठितम् ५. वाद्यम् ६. व्याकरणम् ७. छन्दो ८. ज्योतिषम् ९. 5 शिक्षा १०. निरुक्तम् ११. कात्यायनम् १२. निघण्टुः १३. पत्रच्छेद्यम् १४. नखच्छेद्यम् १५. रत्नपरीक्षा १६. आयुधाभ्यासः १७. गजारोहणम् १८. तुरगारोहणम् १९. तयोः शिक्षा २०. मन्त्रवादः २१. यन्त्रवादः २२. रसवादः २३. खन्यवादः २४. रसायनम् २५. विज्ञानम् २६. तर्कवादः २७. सिद्धान्तः २८. विषवादः २९. गारुडम् ३०. शाकुनम् ३१. वैद्यकम् ३२. आचार्यविद्या ३३. आगमः ३४. प्रासादलक्षणम् ३५. सामुद्रिकम् ३६. स्मृतिः ३७. पुराणम् ३८. इतिहासः ३९. वेदः ४०. 10 विधिः ४१. विद्यानुवादः ४२. दर्शनसंस्कारः ४३. खेचरीकला ४४. अमरीकला ४५. इन्द्रजालम् ४६. पातालसिद्धिः ४७. धूर्तशम्बलम् ४८. गन्धवादः ४९. वृक्षचिकित्सा ५०. कृत्रिममणिकर्म ५१. सर्वकरणी ५२. वश्यकर्म ५३. पणकर्म ५४. चित्रकर्म ५५. काष्ठघटनम् ५६. पाषाणकर्म ५७. लेपकर्म ५८. चर्मकर्म ५९. यन्त्रकरसवती ६०. काव्यम् ६१. अलङ्कारः ६२. हसितम् ६३. संस्कृतम् ६४. प्राकृतम् ६५. पैशाचिकम् ६६. अपभ्रंशम् ६७. कपटम् ६८. देशभाषा ६९. धातुकर्म 15 ७०. प्रयोगोपायः ७१. केवलीविधिः ७२. एताः सकलाः कलाः शिक्षितवान्। लक्षण-तर्कादि-ग्रन्थान् परिचितवान्। बप्पभट्टिना साकमस्थिमज्जन्यायेन प्रीतिं बद्धवान्।

६४. यतः-आरंभगुर्वी[1] क्षयिणी क्रमेण ह्रस्वा पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम्॥ ४॥

कियत्यपि गते[2] काले यशोवर्मनृपेणासाध्यव्याधितेन पट्टाभिषेकार्थमामकुमाराकारणाय 20 प्रधानपुरुषाः प्रेषिताः। अनिच्छन्नपि तैस्तत्र नीतः। पितुर्मिलितः[3]। पित्राऽऽलिङ्गितः सबाष्पगद्गदमुपालब्धश्च-

६५. धिग् वृत्तवृत्तमुचितां शुचितां धिगेतां धिक् कुन्दसुन्दरगुणग्रहणाग्रहित्वम्।
चक्रेऽङ्गसीम्नि तव मौक्तिक! येन वृद्धिर्वार्द्धेर्न तस्य कथमप्युपयुज्यसे यत्॥ ५॥

अभिषिक्तः स्वराज्ये। शिक्षितश्च प्रजापालनादौ। एतत्कृत्वा यशोवर्मा अर्हन्तं त्रिधा[4] शुद्ध्या 25 शरणं श्रयन् स्वर्गं गतः। आमराजा पितुरौर्ध्वदेहिकं कृतवान्। द्विजादिदीनलोकाय वित्तं दत्तवान्। लक्षद्वितयमश्वानाम्, हस्तिनां रथानां च प्रत्येकं चतुर्दशशती, एका कोटी पदातीनाम्। एवं राज्यश्रीः श्रीआमस्य न्यायरामस्य। तथापि बप्पभट्टिमित्रं विना पलालपूलप्रायं मन्यते स्म। ततो मित्रानयनाय प्रधानपुरुषानप्रैषीत्। तैस्तत्र गत्वा विज्ञप्तम्-हे श्रीबप्पभट्टे! आमराजः समुत्कण्ठयाऽऽह्वयति। आगम्यताम्। बप्पभट्टिना गुरूणां वदनकमलमवलोकितम्। तैः सङ्घानुमत्या 30 गीतार्थयतिभिः समं बप्पभट्टिमुनिः प्रहितः। आमस्य पुरं गोपालगिरिं प्राप। राजा सबलवाहनः संमुखमगात्। प्रवेशमहमकार्षीत्। सौधमानैषीत्। अवोचत च-भगवन्! अर्द्धराज्यं गृहाण। तेनोक्तम्-अस्माकं निर्ग्रन्थानां सावद्येन राज्येन किं कार्यम्?। यतः-

---

1 C आपातगुर्वी। 2 P नास्ति। 3 C मिलितः। 4 P त्रिविध॰।

६६. अनेकयोनिसम्पाताऽनन्तबाधाविधायिनी । अभिमानफलैवेयं राज्यश्रीः सा विनश्वरी ॥ ६ ॥

§ ३७) ततो राज्ञाऽसौ तुङ्गे धवलगृहे स्थापितः । प्रातः सभामागताय बप्पभट्टये नृपेण सिंहासनं मण्डापितम् । तेन गदितम्-ऊर्वीपते! आचार्यपदं विना सिंहासनं न युक्तम् । गुर्वाशातना भवेत् । ततो राज्ञा बप्पभट्टिः प्रधानसचिवैः सह गुर्वन्तिके प्रहितः । विज्ञप्तिका च[1] दत्ता-यदि मम प्राणैः कार्यं तदा प्रसद्य सद्योऽयं महर्षिः सूरिपदे स्थाप्यः । 5

योग्यं सुतं च शिष्यं च नयन्ति गुरवः श्रियम् ।

स्थापितमात्रश्चात्र शीघ्रं प्रेषणीयः । अन्यथाऽहं न भवामि । मा विलम्ब्यतामिति । अखण्डप्रयाणकैर्मोढेरकं प्राप्ताः[2] । सचिवैः सूरयो विज्ञप्ताः-प्रभो! राजविज्ञप्त्यर्थोऽनुसार्यः । उचितज्ञा हि भवादृशाः ।

अथ श्रीसिद्धसेनाचार्यैर्बप्पभट्टिः सूरिपदे स्थापितः । तदङ्गे श्रीः साक्षादिव सङ्क्रामन्ती दृष्टा । 10 रहश्च शिक्षा दत्ता-वत्स! तव राजसत्कारो भृशं भावी । ततश्च लक्ष्मीः प्रवर्त्स्यति । तत इन्द्रियजयो दुष्करः । त्वं महाब्रह्मचारी भवेः[3] ।

विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।

अनेन महाव्रतेन महत्तरः स्फुरिष्यसि ।

६७. एकादशाधिके तत्र जाते वर्षशताष्टके । विक्रमात्सोऽभवत्सूरिः कृष्णचैत्राष्टमीदिने ॥ ७ ॥ 15

गुरुणा आमराजसमीपे प्रेषितः । तत्र प्राप्तः । गोपगिरेः प्रासुकवनोद्देशे स्थितः । राजा अभ्यागत्य महामहेन तं पुरीं प्रावीविशत् । श्रीबप्पभट्टिसूरिणा तत्र देशना क्लेशनाशिनी दत्ता-

६८. श्रीरियं प्रायशः पुंसामुपस्कारैककारणम् । तामुपस्कुर्वते ये तु रत्नसूस्तैरसौ रसा ॥ ८ ॥

आमेन गुरूपदेशादेकोत्तरशतहस्तप्रमाणः प्रासादः कारयामासे गोपगिरौ । अष्टादशभारप्रमाणं श्रीवर्द्धमानबिम्बं तत्र निवेशयांबभूवे । प्रतिष्ठा विधापयांचक्रे । तत्र चैत्ये मूलमण्डपः 20 सपादलक्षेण सौवर्णटङ्कैर्निष्पन्न इति वृद्धाः[7] प्राहुः । आमः कुञ्जरारूढः सर्वर्द्ध्या चैत्यवन्दनाय याति ॥ मिथ्यादृशां दृशौ सैन्धवेनेव[8] पूर्येते सम्यग्दृशां त्वमृतेनेव । एवं प्रभावना । प्रातर्नृपो मौलमनर्घ्यं स्वं सिंहासनं सूरये निवेशापयति । तद् दृष्ट्वा विप्रैः क्रुधा ज्वलितैर्भूपो विज्ञप्तःदेव! श्वेताम्बरा अमी शूद्राः । एभ्यः सिंहासनं किम् । अथास्तां तत् । परं '[9]हसीयो भवतु[10]' । मुहुर्मुहुस्तैरित्थं विज्ञप्त्या कदर्थ्यमानः पार्थिवो मौलसिंहासनं कोशगं कारयित्वाऽन्यल्लघ्वारू- 25 ढपत् । प्रत्यूपे सूरीन्द्रेण तद् दृष्ट्वा रुष्टेनेव राज्ञोऽग्रे पठितम्-

६९. मर्दय मानमतङ्गजदर्पं विनयशरीरविनाशनसर्पम् । क्षीणो दर्पाद्दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि ॥९॥

इदं श्रुत्वा राज्ञा ह्रीणेन तदा[11] भूयो मूलसिंहासनमनुज्ञातम् । अपराधः क्षमितः ।

एकदा सपादकोटी हेम्नां दत्ता गुरुभ्यः । तैर्निरीहैः सा जीर्णोद्धारे ऋद्धियुक्तश्रावकपार्श्वाद् व्ययिता । 30

---

1 P 'च' नास्ति । 2 PC प्राप्तो बप्पभट्टिः । 3 C भव । 4 P धीराः । 5 CD तां । 6 B •हस्तमात• । 7 P बुधाः । 8 P सैन्धवेन । 9 A हसायो (काष्ठमयः इति टिप्पनी); CP हसीयो । 10 P भवतु न महत् । 11 CP सदा ।

अन्यदा शुद्धान्ते प्रम्लानवदनां वल्लभां दृष्ट्वा प्रभोः पुरो गाथार्द्धं राजाऽऽह–

७०. अज्जवि सा परितप्पइ कमलमुही अत्तणो पमाएण ।

समस्येयम् । प्रभुः स्माह–

पढमविबुद्धेण तए जीसे पच्छाइयं अंगं ॥ १० ॥

5 राजा आत्मसंवादाच्चमत्कृतः । अन्यदा प्रियां पदे पदे मन्दं मन्दं सञ्चरन्तीं दृष्ट्वा गाथार्द्धं राजा जगाद

७१. बाला चंकंमंती पए पए कीस कुणइ मुहभंगं ।

सूरिराह–

नूणं रमणपएसे मेहलिया छिवइ[1] नहपंतिं ॥ ११ ॥

10 इदं श्रुत्वा राजा मुखं निःश्वासहतदर्पणसमं दध्रे–अमी मदन्तःपुरे कृतविप्लवा इति धिया । तथाचार्यैः क्षणार्द्धेनावगतम् । चिन्तितं च–अहो विद्यागुणोऽपि दोषतां गतः ! ।

७२. जलधेरपि कल्लोलाश्चापलानि कपेरपि । शक्यन्ते यत्नतो रोद्धुं न पुनः प्रभुचेतसः ॥ १२ ॥

रात्रौ सूरिः संघमप्यनापृच्छ्य राजद्वारकपाटसम्पुटतटे काव्यमेकं लिखित्वा पुराद्बहिर्ययौ । तद्यथा–

15 ७३. यामः स्वस्ति तवास्तु रोहणगिरे ! मत्तः स्थितिप्रच्युता, वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा, ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १३ ॥

७४. [ *अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान् किं वा विमुञ्चसि विभो ! यदि वा विमुञ्च ।
हा हन्त ! केकिवर ! हानिरियं तवैव भूपालमूर्द्धनि पुनर्भविता स्थितिर्नः ॥ १४ ॥

७५. *हंस जिहिं गय तिहिं गया महिमण्डणा हवंति । छेहु तांह सरोवरह जं हंसे मुच्चंति ॥ १५ ॥]

20 § ३८) दिनैः कतिपयैर्गौडदेशान्तर्विहरन् लक्षणावतीनाम्न्याः पुरो[3] बहिरारामे समवात्सीत्[4] । तत्र पुरि धर्मो नाम राजा । स च गुणज्ञः । तस्य सभायां वाक्पतिनामा कविराजोऽस्ति । तेन सूरीणामागमनं लोकादवगतम् । ज्ञापितश्च राजा । राज्ञा प्रवेशमहः कारितः । पूर्मध्येऽसौ[5] सौधोपान्ते गुरुस्तुङ्गगृहे स्थितः[6] । राजा नित्यं वन्दते । कवयो जिता[7] रञ्जिताश्च । प्रभावनाः प्रैधते स्म । यशश्च कुन्दशुभ्रम् । † [ राजा प्रोचे–

25 ७६. अदृष्टे दर्शनोत्कण्ठा दृष्टे विरहभीरुता । दृष्टेन वाप्यदृष्टेन भवता नाप्यते सुखम् ॥ १६ ॥

निर्बन्धे सूरिराह–आमश्चेत्स्वयमायास्यति तदा वयं यास्यामो नान्यथा–इति प्रतिज्ञाय स्थापिताः पुण्यलाभं कुर्वन्ति । ]

इतश्च यदा बप्पभट्टिः कृतविहारः प्रातः श्रीआमपार्श्वं नायातस्तदा तेन सर्वत्रावलोकितो न लब्धः । राजा[8] जातो विलक्षः । 'यामः स्वस्ति तवास्तु' इत्यादि काव्यं दृष्टम्[9] । अक्षराण्युपल-

30 क्षितानि । ध्रुवं स मां मुक्त्वा क्वापि गत एवेति निर्णीतम् । अन्यदा बहिर्गतेन राज्ञा [10]महा-भुजङ्गमो दृष्टः । तं मुखे धृत्वा वाससाऽऽच्छाद्य सौधं गतः । कविवृन्दाय समस्यामर्पितवान्–

---

1 BG छिवइ; PC छिवइ । 2 P ०मनाइ० । * एतत्पद्यद्वयं P पुस्तक एवोपलभ्यते, नान्यत्र । 3 P नगर्याः । 4 BDP समवासार्षीत् । 5 BP नास्ति 'असौ' । 6 P स्थापितः । 7 AC नास्ति 'जिताः' । † P पुस्तक एवैष कोष्ठकगतः पाठः प्राप्यते । 8 CP नास्ति । 9 P काव्यानि दृष्टानि । 10 P 'महा' नास्ति ।

७७. [शस्त्रं शास्त्रं कृषिर्विद्या अन्यो यो येन जीवति।]

इति। पूरिता सर्वैरपि। न तु नृपश्चमत्चकार, हृदयाभिप्रायाकथनात्। तदा बप्पभट्टिं पादं स्मृतवान्। सा हृदयसंवादिनी गीस्तत्रैव। अथ स पटहमघीवदत्। तत्रेदमजूघुषत्–यो मम हृद्गतां समस्यां पूरयति तस्मै हैमटङ्कलक्षं ददामि। तदा गोपगिरीयो द्यूतकारः कश्चिद् गौडदेशं गतः। स बप्पभट्टिसूरीणामग्रे तत्समस्यापदद्वयं कथितवान्। सूरिणा पश्चार्द्धं पेठे–

सुगृहीतं च कर्तव्यं कृष्णसर्पमुखं यथा॥ १७॥

इति। स हि भगवान् पङ्क्तिकृतित्यागी सिद्धसारस्वतो गगनगमनशक्त्या विविधतीर्थवन्दनशक्तियुक्तस्तस्य कियदेतत्। स द्यूतकारस्तत्पादद्वयं गोपगिरौ श्रीआमाय[1] निवेदितवान्। राजा दध्वान–अहो सुघटितत्वमर्थस्य!। तं पप्रच्छ–केन कथं पूरिता समस्या?। द्यूतकृदाह–लक्षणावत्यां बप्पभट्टिसूरिणा ज्ञानभूरिणा[2] इति। तस्योचितं दानं चक्रे।

अन्यदा राजा नगर्या बहिर्ययौ। न्यग्रोधद्रुमाधः पान्थं मृतं ददर्श। शाखायां लम्बमानं करपत्रकमेकं विप्रुषां व्यूहं स्रवन्तं गाथार्द्धं च विशिष्टे ग्राव्णि लिखितं खटिकया[3] तदपश्यत्।

७८. तइया मह निग्गमणे पियाइ थोरंसुएहिं जं रुण्णं।

तदपि समस्यापादद्वयं राज्ञा कविभ्यः कथितम्। न केनापि सुष्ठु पूरितम्। राजा चिन्तयति स्म–

७९. वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम्।
हृदयग्राहिणस्तासां[4] द्वित्राः सन्ति न सन्ति वा॥ १८॥

हृदयग्राही स एव मम मित्रं सूरिवरः। स एव [दौरोदरिको] नृपेणोपसूरि प्रैषि। सूरिणाऽक्षिनिमेषमात्रेण पूरिता समस्या–

करवत्तयबिंदुअनिवडणेण तं मज्झ संभरियं॥ १९॥

तत्पुनर्द्यूतकाराच्छ्रुत्वा राज्ञा हृष्टेनोत्कण्ठितेन सूरेराह्वानाय वाग्मिनः सचिवाः प्रस्थापिताः। उपालम्भसहिता विज्ञप्तिश्च ददे। प्राप्तास्ते तत्र। दृष्टास्तैस्तत्र सूरयः। उपलक्ष्य वन्दिताः। राजविज्ञप्तिर्दत्ता। तत्र लिखितं वाचितं गुरुभिः–

८०. न गङ्गां गाङ्गेयं सुयुवतिकपोलस्थलगतं न वा शुक्तिं मुक्तामणिरुरसिजस्पर्शरसिकः।
न कोटीरारूढः स्मरति च सवित्रीं मणिचयस्ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम्॥ २०॥

८१. छायाकारणि सिरि[5] धरिय पच्चवि[6] भूमि पडंति। पत्तहं इहु[7] पत्तत्तणउं तरुअर कांइ करंति॥ २१॥

सचिवा अप्यूचुः–स्वामिन्! आमराजो निर्व्याजप्रीतिर्विज्ञापयति–शीघ्रमागम्याऽयं देशो वसन्तावतंसितोद्यानलीलां लम्भनीयः। भवद्वाग्रससंलुब्धानामस्माकमितरकविवाग् न रोचते।

८२. कथासु ये लब्धरसाः कवीनां ते नानुरज्यन्ति कथान्तरेषु। न ग्रन्थिपर्णप्रणयाश्चरन्ति कस्तूरिकागन्धमृगास्तृणेषु॥२२॥

तदाकर्ण्य लेखं दत्त्वा सूरिभिः सचिवाः प्रोचिरे–श्रीआमो गीष्पतिसमप्रज्ञ एवं भाषणीयः–

---

1 CP आमाग्रे। 2 P नास्त्येतत्पदम्। 3 BCP कठिन्याऽपश्यत्। 4 P तेषां। 5 P सिर। 6 BCG पच्छिवि। 7 C एहु; P एउ; G यहु। 8 AB वाक्यरस०। 9 C निग्रन्थि; P न गन्धि।

अस्माकमिति हि[1] प्रतिज्ञाऽऽस्ते धर्मेण राज्ञा सह-स्वयमामः समेत्य त्वत्समक्षं यदाऽस्माना-कारयते किल, तदा तत्र यामो नान्यथा इति। प्रतिज्ञालोपश्च नोचितः सत्यवादिनां प्रतिष्ठा-वताम्। ततो मन्त्रिण उपकन्यकुब्जेशमाजग्मुः। सूरीणां तदुक्तमुक्तं लेखश्चादर्शि। तत्र लिखितं यथा-

5 ८३. अस्माभिर्यदि वः कार्यं तदा धर्मस्य भूपतेः। सभायां छन्नमागम्य स्वयमापृच्छ्यतां द्रुतम्॥ २३॥

८४. विंझेण विणावि गया नरिंदभवणेसु हुंति गारविया। विंझो न होइ वंगो गएहिँ बहुएहिँ वि गएहिँ॥ २४॥

८५. माणसरहिएहिं सुहाइं जह न लब्भंति रायहंसेहिं। तह तस्स वि तेहिं विणा तीरुच्छंगा न सोहंति॥ २५॥

८६. परिसेसियहंसउलं पि माणसं माणसं न संदेहो। अन्नत्थ वि जत्थ गया हंसा वि बया न भण्णंति॥ २६॥

८७. हंसा जहिँ गय तहिँ जि गया महिमंडणा हवंति। छेहउ तांह महासरहं जे हंसेहिं मुबंति॥ २७॥

10 ८८. मलओं सचंदणु चिय नइमुहहीरंतचंदणदुमोहो। पब्भट्ठं पि हु मलयाओं चंदणं जायइ महग्घं॥ २८॥

८९. अग्घायंति महुअरा विमुक्ककमलायरा वि मयरंदं। कमलायरो वि दिट्ठो सुओ वि किं महुअरविहीणो॥ २९॥

९०. इक्केण कुत्थुहेणं विणावि रयणायरु च्चिय समुद्दो। कुत्थुहरयणं पि उरे जस्स ठिओं सोवि हु महग्घो॥ ३०॥

९१. पइं मुक्काण वि तरुवर फिट्टइ पत्तत्तणं न पत्ताणं। तुह पुणु च्छाया जइ होइ कह वि ता तेहिं पत्तेहिं॥ ३१॥

९२. जे के वि पहू महिमंडलंमि ते उच्छुदंडसारिच्छा। सरसा जडाण मज्झे विरसा पत्तेसु दीसंति॥ ३२॥

15 ९३. संपइ पहुणो पहुणो पहुत्तणं किं चिरंतणपहूणं। दोसगुणा गुणदोसा एहिं कया नहु कया तेहिं॥ ३३॥

एतद्वाचयित्वा सोत्कण्ठं नृपः सारकतिपयपुरुषवृतोऽचालीत्। गोदावरीतीरग्राममेकमगमत्। तत्र खण्डदेवकुले वासमकार्षीत्। देवकुलाधिष्ठात्री व्यन्तरी सौभाग्यमोहिता गङ्गेव भरतं तं भेजे। प्रभाते करभमारुह्य तां देवीमापृच्छ्य प्रभुपादान्तं प्राप। गाथार्द्धं पपाठ-

९४. अज्जवि सा सुमरिज्जइ को नेहो[2] होइ एगराईए।

20 सूरीन्द्रः प्राह-

गोलानईय[4] तीरे सुन्नउले जंसि वीसमिओ॥ ३४॥

इति। अन्योऽन्यं गाढमालिलिङ्गतुरुभौ। तत आम आह स-

९५. अद्य मे सफला प्रीतिरद्य मे सफला रतिः। अद्य मे सफलं जन्म अद्य मे सफलं कुलम्[5]॥ ३५॥

रात्रौ इष्टगोष्ठी वधृते मधुमधुरा। ततः प्रभाते सूरिर्धर्मनृपास्थानमगमत्। आमनृपोऽपि

25 प्रधानैः स्वैः पुरुषैः सह स्थगीधरो भूत्वाऽऽगच्छत्। [‡'आम आवउ' इति ब्रुवाणैः] सूरिभिर्ध-र्माय आमस्य विशिष्टपुरुषा दर्शिताः। एते आमनृपनराः किलास्मानाह्वातुमायाताः-इति। धर्मेण राज्ञा पृष्टं विशिष्टजनपार्श्वे-भो आमप्रधाननराः! स भवतां स्वामी कीदृशरूपः। तैर्निगदितम्-यादृगयं स्थगीधरस्तादृगस्ति। प्रथमं मातुलिङ्गं करे धारयित्वा आम आनी-तोऽस्ति। सूरिभिः पृष्टम्-भोः स्थगीधर! तवकरे किमेतत्?। स्थगीधरीभूतेन श्रीआमेनोक्तम्-

30 'बीजउरा' इति। क्षणार्द्धेन वार्त्तामध्ये[6] सूरिभिः सूक्तमवतारितम्-

1 P नास्ति। 2 A कन्यकुब्जेशसमीपे। 3 P नास्ति। 4 A गोदानईइ। 5 AC कक्षम्। ‡ P पुस्तक एवैतद्वाक्यं लभ्यते। 6 A वार्ताईमध्ये।

९६. तत्ती सीयली मेलावा[1] केहा धण[2] उत्तावली पिउ[3] मंदसणेहा ।[4]
विरहिं माणुसु जो मरइ[5] तसु कवणु निहोरा[6] कण्णि[7] पवित्तडी जणु जाणइ दोरा ॥ ३६ ॥

[[†]गुरुणा कथितम्–आम आवउ, आम आवउ । धर्मेण राज्ञा तृअरिछोडं दृष्ट्वा पृष्टम्–अहो स्थगीधर ! किमिदम् ? । तेनोक्तम्–'तृअरि' तवारीत्यर्थः । ] इत्यादिगोष्ठ्यां वर्तमानायां शनैः शनैः श्रीआमराजश्छिद्रूपो मेलापकाच्चिःसृत्य पुराद्बहिः स्थाने स्थाने स्थापितैर्वाहनैः कियतीमपि भूमिमत्यक्राम्यत् । तावता सूरीश्वरो विलम्बाय प्रहरद्वयं कामपि कथामचीकथत् । रसावतारः स कोऽपि जातो यो रम्भा-तिलोत्तमाप्रेक्षणीयकेऽपि दुर्लभः । आमो राजाऽमूल्यं कङ्कणं प्रहणके मुक्त्वा वेश्यागृहे उषित आसीत् । सा तु लक्षणावतीपतेर्वारस्त्री । एकं कङ्कणमामो राजद्वारे मुञ्चन्नगात् । अपराह्णे राज्ञः पार्श्वाद् बप्पभट्टिसूरिभिर्मुत्कलापितम्–देव ! गोपगिरावामपार्श्वे यामः, अनुज्ञां दीयताम् । धर्मेण भणितम्–भवतामपि वाणी विघटते ? । भवद्भिर्भणितमभूत्–यदा तव दृष्टौ आमः समेत्यास्मानाह्वयिष्यति[8] तदा यामो नार्वाक् । तत्किं विस्मृतम् ? । जिह्वे किं नो द्वे स्तः ? । आचार्या जगदुः–श्रीधर्मदेव ! मम प्रतिज्ञा पूर्णा । राजाऽऽह–कथम् ? । सूरिर्वदति–आमो राजाऽत्र स्वयमागतस्तव दृष्टौ । राजाऽऽह–कथं ज्ञायते ? । सूरिः–यदा भवद्भिः पृष्टं भवतां स्वामी कीदृशः ? । विशिष्टैस्तदा भणितम्–स्थगिकाधररूपः । तथा 'बीजउरा' शब्दोऽपि विमृश्यताम् । 'दोरा'शब्दोऽपि यो मयोक्तोऽभूत् । तस्मात्प्रतिज्ञा मे पूर्णा । अत्रान्तरे केनापि राजद्वाराद् आमकङ्कणं धर्मनृपहस्ते दत्तं आमनामाङ्कितम् । द्वितीयं वेश्यया दत्तम् । तद् दृष्ट्वा नष्टसर्वस्वस्तद्धन[9] इव धर्मः शुशोच–धिग्माम् ! यन्मया शत्रुः स्वगृहमायातो नार्चितः, न च साधितः[10] । धर्मेण मुत्कलिताः सूरयः पुरः क्वापि स्थितेनामेन सह जग्मुः । मार्गे गच्छता आमेन पुलिन्द[11] एको जलाशयमध्ये जलं छगलवन्मुखेन पिबन्दृष्टः । आमराजेन सूरीणामग्रे प्रत्योक्तम्–

९७. पसु जेम पुलिंदउ पउ पियइ पंथिउ[12] कवणिण कारणिण ।

सूरिभिरभाणि–

कर वे वि करंविअ कज्जलिण मुद्धह अंसु निवारणिण ॥ ३७ ॥

राज्ञा प्रत्ययार्थं स समाकार्य पृष्टः । तेनोक्तम्–सत्यं सूरिवचः । हस्तौ दर्शितौ । राजा तेन वाक्संवादेन प्रीतः । 'अज्जवि सा परितप्पइ' इत्यादि तदुक्तं सर्वं सारस्वतविलसितमिति निरवैपीत् । शीघ्रशीघ्रं गोपालगिरिं गतः । पताकातोरणमश्वप्रतिमश्वादिमहास्तत्रासुः । दिवसाः कत्यप्यतिक्रान्ताः ।

§ ३९) ततः श्रीसिद्धसेनसूरयो वार्द्धक्येन पीडिता अनशनं गृहीतुकामाः श्रीबप्पभट्टिसूरीणामाकारणाय गीतार्थमुनियुगलं प्रैषिषुः[13] । तद् गुरोर्लेखमदीदृशत् । तत्र लिखितं यथा–

९८. अध्यापितोऽसि पदवीमधिरोपितोऽसि तत्किञ्चनापि कुरु वत्सक ! बप्पभट्टे ! ।
प्रायोपवेशनरथे विनिवेश्य येन सम्प्रेषयस्समरधाम नितान्तमस्मान् ॥ ३८ ॥

---

1 BD मलावा । 2 PC धणि उत्तावली । 3 C प्रिय । 4 BD ०सिणेहा । 5 P विरहि जो मणु सुमरइ; D विरहि जइ माणु० । 6 BD नहोरा । 7 C [कन्न] । † P पुस्तकस्थः प्रक्षिप्तः पाठोऽयम् । 8 BDP ०आह्वयति । 9 BP तद्धन; C तधन । 10 CP आदर्शे एतत्पदं प्राप्यते नान्यत्र । 11 D पुलीन्द्रः । 12 A पंथिअ । 13 प्रैषिष ।

तद् दृष्ट्वा आमभूपतिमापृच्छ्य मोढेरकपुरं ब्रह्मशान्तिस्थापितवीरजिनमहोत्सवाढ्यं प्रापुस्ते । गुरून् ववन्दिरे । गुरवोऽपि तान् बाढमालिङ्ग्यालापिषुः—वत्स ! गाढमुत्कण्ठितमस्माकं हृदयम् । मुखकमलकमपि ते विस्मृतम् । राजानुगमनं तेऽस्माकं दुःखायासीत् । कारय साधनाम् । अनृणो भव । ततोऽन्त्याराधना चतुःशरणगमन-दुष्कृतगर्हा-सुकृतानुमोदना-तीर्थमालावन्दनादिका 5 विधिना विधापिता । गुरवो देवलोकललनानयनत्रिभागपात्रत्वमानशुः । शोक उच्छलितः । ततो बप्पभट्टिः श्रीमद्गोविन्दसूरये श्रीनन्नसूरये च गच्छभारं समर्प्य श्रीआमपार्श्वमगमत्[1] । पूर्ववत्समस्यादिगोष्ठ्यः स्फुरन्ति ।

§४०) एकदा सूरिर्नृपसभायां चिरं पुस्तकाक्षरदत्तदृक् तस्थौ । तत्रैका नर्त्तकी नृत्यन्ती आसीत् रूपदासीकृताप्सराः । सूरिर्दृग्नीलि[2]निवारणाय तस्याः शुकपिच्छनीलवर्णायां नील-10 कञ्चुलिकायां दृशं निवेशयामास । आमस्तद्[3] दृष्ट्वा मनसि पपाठ—

९९. सिद्धंततत्तपारंगयाण जोगीण जोगजुत्ताणं । जइ ताणं पि मयच्छी मणंमि ता तच्चिय पमाणं ॥ ३९ ॥

आमो रात्रौ पुंवेषां तां नर्त्तकीं सूरिवसतौ प्रैषीत् । तया सूरीणां विश्रामणाऽऽरब्धा । कर-स्पर्शेन ज्ञाता युवतिः सूरिणा । अभिहिता सा—का त्वम् ?, कस्मादिहागता ? । अस्मासु ब्रह्मव्र-तनिबिडेषु वराकि ! भवत्याः कोऽवकाशः । 'वात्याभिर्न चलति काञ्चनाचलः ।' तयोक्तम्—भवन्तम् 15 उपवेष्टुमागता ।

१००. राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् । सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ४० ॥

इति । किञ्च—

१०१. प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥ ४१ ॥

श्रीआमेन प्रेषिताऽहं प्राणवल्लभा भवतां शुश्रूषार्थम् । ततः सूरिशक्रो वदति स्म—अस्माकं 20 ज्ञानदृक्प्रपातदृष्टद्रष्टव्यानां नैव व्यामोहाय प्रगल्भसे ।

१०२. मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम् । रतिं करोति को नाम सुधीर्वर्चोगृहेष्विव ॥ ४२ ॥

सापि निर्विकारं सूरिवरं निश्चित्य ध्वनचेताः प्रातर्नृपतिसमीपं गता । पृच्छते राज्ञे रात्रीयः सूरिवृत्तान्तः सम्यक् कथितस्तया—पाषाणघटित इव तव गुरुः । नवनीतपिण्डमयः शेषो 'वराको[4] लोकः । यावन्तः कूटप्रपञ्चा हावभाव-कटाक्ष-भुजाक्षेप-चुम्बन-नखरदनक्षता[5]दिविलासास्ते सर्वे 25 आजन्मशिक्षितास्तत्र प्रयुक्ताः । पुनस्तिलतुषत्रिभागमात्रमपि मनोऽस्य नाचालीत् । अनुराग-बलात्कार-पूत्कार-भीदर्शन-हत्यादानादिविभीषिकाभिरपि नाक्षुभत् । तदेष मन्ये महावज्रमयो न देवकन्याभिर्न विद्याधरीभिर्न नागाङ्गनाभिश्चाल्यते; मानुषीणां तु का कथा ? । अस्मिन्सूरेर्द्धर्मस्थैर्ये श्रुते नृपो विस्मयानन्दाभ्यां कदम्बमुकुलस्थूलरोमाञ्चकञ्चुकितगात्रः संवृत्तः । दध्यौ च गुरुं ध्यानप्रत्यक्षं कृत्वा—

30 १०३. न्युञ्छने यामि वाक्यानां दृशोर्याम्यवतारणे । बलिः क्रियेऽहं सौहार्दहृद्याय हृदयाय ते ॥ ४३ ॥

प्रातर्गुरवः समागुः । राजा ह्रीणो न वदति किञ्चित् । सूरिभिर्भणितम्—राजन् ! मा लज्जिष्ठाः । महर्षीणां दूषण-भूषणान्वेषणं राज्ञा कार्यं न दोषः । राज्ञोक्तम्—अलमतीतवृत्तान्तचर्चया । एत-दहमुत्तम्भितभुजो ब्रुवे युष्मान्ब्रह्मधनानवलोक्य—

---

1 A आगतः । 2 A दृग्मीलि० । 3 CP तथा । 4 P नास्ति 'वराको' । 5 D नखदन्ताक्षता० ।

२९५

१०४. धन्यास्त एव [1]धवलायतलोचनानां तारुण्यदर्पघनपीनपयोधराणाम्।
क्षामोदरोपरिलसत्त्रिवलीलतानां दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम्॥ ४४॥

इत्युक्त्वा दण्डप्रणामेन प्रणनाम श्रीआमः।

अन्येद्यू राजा राजपथेन सञ्चरमाणो हालिकप्रियां एरण्डबृहत्पत्रसंवृतस्तनविस्तरां एरण्डपत्राणि विचिन्वानां गृहपाश्चात्यभागे दृष्ट्वा गाथार्द्धं योजितवान्– 5

१०५. वइविवरनिग्गयदलो एरंडो [2]साहइ व्व तरुणाणं।

तत्तु सूरीणां पुरः समस्यात्वेन समर्पितवान्। सूरय ऊचुः–

इत्थ घरे हलियवहू [3]इद्दहमित्तत्थणी अत्थि॥ ४५॥

राजा विस्मितः–अहो सारं सारस्वतम्!।

अन्यदा सायं प्रोषितभर्तृकां वासभवनं यान्तीं वक्रग्रीवां दीपकरां ददर्श। गाथार्द्धं चोचे– 10

१०६. दिज्जइ [4]वंकग्गीवाइ दीवओ पहियजायाए।

सूरेरग्रे पपाठ। सूरिर्गाथापूर्वार्द्धमुवाच–

पियसंभरणपलुट्टंतअंसुधारानिवायभीयाए॥ ४६॥

इति सूरिभूपौ सुखेन कालं गमयतो धर्मपरौ।

§ ४१) अन्यदा धर्मनृपेण आमनृपस्य पार्श्वे दूतः प्रहित एत्यावोचत्–राजन्! तव विचक्षणतया धर्मनृपः सन्तुष्टः। पुनः स आह–भवद्भिर्वयं छलिताः। यतो भवद्भ्यो गृहमागतेभ्यो नास्माभिर्महानल्पोऽपि कोऽपि सत्कारः कृतः। अधुना शृणु–अस्मद्राज्ये वर्द्धनकुञ्जरो नाम महावादी बौद्धदर्शनी विदेशादागतोऽस्ति। स वादं जिघृक्षुः। यः कोऽपि वो राज्ये वादी भवति स आनीयताम्। अस्माकं भवद्भिः सह चिरन्तनवैरम्। यः कोऽपि वादी विजयी भविष्यति तत्प्रभुरपरस्य राज्यं ग्रहीष्यति। मम वादिना यदा जितं तदा त्वदीयं राज्यं मया ग्राह्यम्। 20 यदा तव वादिना जितं तदा मदीयं राज्यं त्वया ग्राह्यम्। अयं पणः। वाग्युद्धमेवास्तु। किं मानवकदनेन[5]?। आमेनोक्तम्–दूत! त्वया यदुक्तं तद्धर्मेण कथापितमथवा त्वया स्वतुण्डकण्डूतिमात्रेणोक्तम्?। यदि तव प्रभुः सप्ताङ्गं राज्यं वादे जिते समर्पयिष्यति मे इति सत्यम्, तदा वयं वादिनमादायागच्छाम इति। दूतेनोक्तम्–कारणवशाद् युधिष्ठिरेणापि द्रोणपर्वण्यसत्यं भाषितम्; मत्प्रभुस्तु कारणेऽपि न मिथ्या भाषते। आमेन दूतः प्रैषि। उक्तदिनोपरि 25 बप्पभट्टिं गृहीत्वाऽर्द्धपथे उक्तस्थाने आमोऽगमत्। धर्मभूपतिरपि वर्द्धनकुञ्जरं वादीन्द्रमादाय तत्राजगाम। परमारवंश्यं नरेन्द्रं महाकविं वाक्पतिनामानं स्वसेवकं सहादाय समायगौ[6]। उचितप्रदेशे आवासान् दापयामास। तौ वादि-प्रतिवादिनौ पक्ष-प्रतिपक्षपरिग्रहेण वादमारेभाते। सभ्याः कौतुकाक्षिप्ताः पश्यन्ति। द्वावप्यसामान्यप्रतिभौ ज्ञौ[7]। वादे षण्मासा गताः। द्वयोः कोऽपि न हारयति न जयति च। आमेन सूरयः प्रोक्ताः सायम्–राजकार्याणां 30 प्रत्यूहः स्यात्, निर्जीयतामसौ शीघ्रम्। सूरिणा भणितम्–[8]प्रातर्निग्रहीष्यामि। मा स्म वो भ्रान्तिर्भूयात्। रात्रौ सूरीश्वरेण मन्त्रशक्त्या मण्डले हारार्द्धहारमणिकुण्डलमण्डिताङ्गी दिव्याऽङ्गरागवसना दिव्यकुसुमपरिमल[9]वासितभुवनोदरा भगवती भारती साक्षादानीता। चतुर्दशभिः

1 A तरलाय०। 2 D साहइ व्व; B तरुणीणं। 3 A इद्दाह। 4 CP विरल०। 5 P कदर्थनेन। 6 P बिना सर्वत्र 'समानिन्ये'। 7 P 'ज्ञौ' नास्ति। 8 AB प्रभाते। 9 D ०मलुलितभुव०।

काव्यैः सयमकैर्दिव्यैः स्तुता । देव्योक्तम्–वत्स ! केन कारणेन स्मृता ? । सूरिवीरैः भणितम्–षण्मासा वादे लग्नाः । तथा कुरु यथा वादे निरुत्तरीभवति सः । देव्या गदितम्–वत्स ! अह्मनेन प्राक् सप्तभवानाऽऽराधिता । मयाऽत्र भवेऽस्मै अक्षयवचना गुटिका दत्ताऽस्ति । तत्प्रभावाच्चक्रिनिधिधनमिव नास्य वचो हीयते । सूरिणोक्तम्–त्वं देवि ! किं जैनशासनविरोधिनी, येन मे जयश्रियं न दत्से ? । भारत्यूचे–वत्स ! जयोपायं ब्रुवे । त्वया वादारम्भे प्रातः सर्वे वदनशौचं काराप्याः पार्षद्याः । गण्डूषं कुर्वतस्तस्य वदनाद् गुटिका ममेच्छया पतिष्यति तदा त्वया जेष्यते । एकं तु याचे–मत्स्तुतेश्चतुर्दशकाव्यं कस्याप्यग्रे न प्रकाश्यम् । तत्पठनेन हि मया ध्रुवं ध्रुवं प्रत्यक्षया भाव्यम् । कियतां प्रत्यक्षा भवामि ? । क्लेशेनालम् । एवमुक्त्वा देवी विद्युज्झात्कारलीलयाऽन्तर्दधे । सूरिभिर्निशि परमाप्तशिष्य एको वाक्पतिराजसमीपं प्रहित्याख्यापितं यथा–सूरयो वदन्ति–राजन् ! त्वं विद्यानिधिरस्माकं लक्षणावतीपुरीपरिचितचरः । तदाऽवादीः–भगवन् ! निरीहा भवन्तः, कां भवद्भ्यो भक्तिं दर्शयामि । तदा वयमवोचाम–अवसरे कामपि भक्तिं कारयिष्यामः । भवद्भिर्भणितम्–तथास्तु । इदानीं सोऽवसरोऽत्र समायातः । वाक्पतिना शिष्यः पृष्टः–सूरयः किं मे समादिशन्ति ? । आदिष्टं कुर्वे ध्रुवम् । शिष्यो न्यवेदयत्–राजन् ! गुरवः आदिशन्ति–प्रातर्धर्मामयोः सदःस्थयोः सतोस्त्वया वाच्यं यथा–वदनशौचं विना भारती न प्रसीदति । तस्माद्वादि-प्रतिवादि-सभ्य-सभेशाः सर्वे शौचं कुर्वन्तु । एतावति कृते भवता नः सर्वः स्नेहः कृत एव । वाक्पतिना तदङ्गीकृतम् । शिष्येणोपगुरु गत्वा तत्तत्प्रतिज्ञातं कथितम् । तुष्टाः गुरवः । प्रत्यूषे उदयति भगवति गभस्तिमालिनि लाक्षालिप्त इव प्राचीमुखे राजानौ सभायामगाताम् । वाक्पतिना वदनशौचं सर्वे कारिताः, बौद्धवादीन्द्रोऽपि । तस्य वदनकमलाद्विगलिता गुटिका अपतत्[1] पतद्ग्रहे । बप्पभट्टिशिष्यैः पतद्ग्रहो जनैर्दूरे कारापितः । गुटिका सूरीन्द्रसाज्जाता । बौद्धो गुटिकाहीनः सूरिणा पार्थेन कर्ण इव दिव्यशक्तिमुक्तो निःशङ्कं वाक्पृषत्कैर्हतः । निरुत्तरीकृतः । राहुग्रस्तश्चन्द्र इव हिमानीविलुप्तस्तरुखण्ड इव निस्तेजतां भेजे । तदा श्रीबप्पभट्टेर्निर्विवादं वादिकुञ्जरकेसरीति बिरुदं स्वैः परैश्च दत्तम् । धर्मेण सप्ताङ्गं राज्यं आमाय दत्तम् ! लाहीदम् । धर्माद्धि राज्यं लभ्यते । काऽत्र चर्चा ? । आमेन गृहीतम् । तदा सूरिणा आमः प्रोक्तः–राजन् ! पुना राज्यं धर्माय देहि । महादानमिदम् । शोभते च ते । राजस्थापनाचार्याश्च पारंपर्येण[2] । 'पूर्वं श्रीरामेण वनस्थेनापि सुग्रीव-विभीषणौ राजीकृतौ । त्वमप्येदंयुगीननृपेषु[3] तत्तुल्यः । एतद्वचनसमकालमेव आमेन गाम्भीर्यौदार्यधाम्ना धर्माय तद्राज्यं प्रत्यर्प्य[4] स[5] परिधापितः । स्वे मत्ताः करिणः शतं, सहस्रं तुङ्गास्तुरङ्गाः, सहस्रं सवरूथा रथाः, शतं वादित्राणि प्रादापिषत । स्वं स्वं स्थानं गताः सर्वे । सूरि-भूपौ यशोधवलितसप्तभुवनौ गोपगिरौ श्रीमहावीरमवन्दिषाताम् । तदा सूरिकृतं श्रीवीरस्य स्तवनम्–'शान्तो वेषः शमसुखफला' इत्यादि काव्यैकादशकमयमद्यापि सङ्घे पठ्यते । सङ्घेन प्रभुर्ववन्दे, तुष्टुवे च ।

१०७. रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयग्रहः । न तमांसि न तेजांसि यस्मिन्नभ्युदिते[7] सति ॥ ४७ ॥

अन्यदा स्व-परसमयसूक्तैः प्रबोध्य राजा प्रभुभिर्मद्यमांसादिसप्तव्यसननियमं ग्राहितः[8] ।

---

1 नास्ति P । 2 P नास्ति । 3 P यूयं । 4 P ॰प्येवं युगीन॰ । 5 D प्रत्यर्पि । 6 B स धर्मैः । 7 D ॰भ्युदये । 8 P कारितः ।

सम्यक्त्वमूलैकादशव्रतनिरतश्च श्रावकः कृतः । द्वादशं व्रतं त्वतिथिसंविभागाख्यं प्रथमचरमजिननृपाणां निषिद्धं सिद्धान्ते ।

§४२) एकदा लक्षणावत्यां बौद्धो वर्द्धनकुञ्जरो धर्मनृपमाह सगद्गदम्–अहं बप्पभट्टिना जितस्तन्मे न दूषणम् । बप्पभट्टिर्हि भारती नररूपा, प्रज्ञामयः पिण्डः, गीष्पुत्रः, न च धुनोति । एतत्तु धुनोति यत्तव भृत्येनापि वाक्पतिराजेन सूरिकृतभेदान्मम मुखशौचोपायेन गुटी हारयाम्चक्रे । 5
एतावदभिधाय स तारं तारं रुरोद । स निवारितः क्ष्मापेन रोदनात् । उक्तश्च–किं क्रियते ?, अयं नश्चिरसेवकोऽनेकसमराङ्गणलब्धजयप्रतिष्ठः प्रबन्धकविः पराभवितुं न रोचते । क्षमस्वेदमस्यागः । ततो बौद्धो जोषं स्थितः ।

§४३) अपरेद्युर्यशोधर्मनाम्ना समीपदेशस्थेन बलवता भूपेन लक्षणावतीमेत्य रणे धर्मनृपो व्यापादितः । राज्यं जगृहे । वाक्पतिरपि बन्दीकृतः । तेन कारास्थेन 'गौडवध' सञ्ज्ञकं प्राकृतं 10
महाकाव्यं रचयित्वा यशोधर्माय राज्ञे[1] दर्शितम् । तेन गुणविशेषविदा ससत्कारं बन्देर्मुक्तः, क्षमितश्च । 'विद्वान् सर्वत्र पूज्यते' । ततो वाक्पतिर्बप्पभट्टि[2]समीपं गतः । द्वयोस्तयोर्मैत्री पूर्वमप्यासीत् । तदानीं विशेषतोऽवृधत् । [†]तेन वाक्पतिना महामहविजयाख्यं प्राकृतं महाकाव्यं बद्धम् । आमाय दर्शितम् । आमो हैमटङ्कलक्षमस्मै व्यशिश्रणत् ।[†]

१०८. कियती पञ्चसहस्री कियती लक्षा च कोटिरपि कीयती[3] । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥४८॥ 15

§४४) अपरेद्युः प्रभुः श्रीआमेन पृष्टः–भगवन् ! यूयं तावत्तपसा विद्यया च लोके लब्धपरमरेखाः । किमन्योऽपि[4] कोऽपि काप्यास्ते यो भवत्तुलालेशमवाप्नोति । बप्पभट्टिरभाणीत्–अवनिपते ! मम गुरुबान्धवौ गोविन्दाचार्य-नन्नसूरी सर्वैर्गुणैर्मदधिकौ गूर्जरधरायां मोढेरकपुरे स्तः । गुणोत्कण्ठयामितसैन्य आमस्तत्र गतः । तदा नन्नसूरिर्व्याख्यानेऽवसरायातान् वात्स्यायनोक्तान् कामाङ्गभावान् पल्लवयन्नासीत् । राज्ञा श्रुतं तत्सर्वम् । अरुचिरुत्पन्ना–अहो ! वयं कामिनोऽपि नैतान् भावान् 20
विद्मः । अयं तु वेत्ति सम्यक् । तस्मादयमवश्यं नित्यं योषित्सङ्गी । किमस्य प्रणामेन ?–इत्यकृतनतिरेवोत्थायाशु गोपगिरिमागात् । चिराद् दृष्टः क्ष्माप इति रणरणकाक्रान्तस्वान्ताः प्रभवो वन्दापयितुमैयरुः । राजा निरादरो न वन्दते तथा । एवं दिनानि कतिपयानि गतानि । एकदा गुरुभिः पप्रच्छे–राजन् ! यथा पुरा भक्तोऽभूस्तथेदानीं भक्तो नासि । किमस्माकं दोषः कोऽपि ? । राजा स्माह–सूरिवर ! भवादृशा अपि कुपात्रश्लाघां कुर्वते । किमुच्यते[5] ? । सूरिभिरूचे[6]–कथम् ? । आमः 25
प्राह–यौ भवद्भिः स्वौ गुरुबान्धवौ स्तुतौ । तत्र गत्वा एको नन्नसूरिनामा दृष्टः शृङ्गारकथाव्याख्यानलम्पटस्तपोहीनो लोहतरण्डतुल्यो मज्जति मज्जयति च भवाम्बुधौ[7] । तस्मान्न किञ्चिदेतत् । सूरयो मसीमलिनवदनाः स्ववसतिमगुः[8] । तत्रोपविश्य द्वौ साधू मोढेरकपुरं प्रहितौ । तत्पार्श्वात्तत्र कथापितम्–आमोऽकृतप्रणामो भवत्पार्श्वादागतः । एवमेवं युष्मां निन्दति । तत्कर्तव्यं येनासौ भवत्स्वन्येष्वपि श्रमणेषु अवज्ञावान्न भवति[10] । सर्वं तत्रत्यं ज्ञात्वा तौ द्वावपि गुटिकया 30
वर्ण-स्वरपरावर्त्तं कृत्वा नटवेषधरौ गोपगिरिमीयतुः । श्रीऋषभध्वजचरित्रं नाटकत्वेन बबन्धतुः । नटान् शिक्षयामासतुः । आमराजमवसरं ययाचतुः । राज्ञाऽवसरो दत्तः । मिलिताः सामा-

1 AB राजेन्द्राय । 2 D ०भट्टेः । † एतच्चिह्नान्तर्गतं कथनं ABD आदर्शे नास्ति, CEP आदर्शे च लभ्यते । 3 पतितमिदं P पुस्तके । 4 BD ०मन्यः कोऽपि । 5 D व्याख्यानावस० । 6 P नास्ति । 7 AB सूरिरूचे । 8 A भवाब्धौ । 9 A ययुः । 10 BD भवेत् ।

जिकाः तत्तद्रसभावज्ञाः। ताभ्यां नाटकं दर्शयितुमारेभे। भरत-बाहुबलिसमरावसरोऽभिनीयते। यदा व्यूहरचना-शस्त्रझलत्कार-वीरवर्णना-भट्टकोलाहलाश्वोत्थापनघर्घरिका-झणझणत्कारादि ताभ्यां वर्णयितुमारब्धम्, धारारूढश्च रसोऽवातारीत्; तदा श्रीआमस्तद्भटाश्च कालिन्दीप्रवाह-श्यामदीर्घानसीनाकृष्योत्थिता 'हत हत' इति भाषन्ते स्म। अत्रान्तरे नन्नसूरि-गोविन्दाचार्यौ 5 स्वरूपमुद्रे प्रकाश्याहतुः-राजन्! भटाः! शृणुत २ कथायुद्धमिदम्, न तु साक्षात्। अलं सम्भ्रमेण। इत्युक्ता लज्जिता विस्मिताश्च ते राजाद्याः संवृत्याकारमस्थुः। तदा गोविन्दाचार्य-नन्नसूरिभ्यां भूपोऽभाणि-किल शृङ्गारानुभविनो वयमिति सम्यग्व्याख्यातुं विद्मः। किन्तु समराजिरमपि भवद्वत्प्रविष्टाः स्मः। कुरङ्गा इव शस्त्रे दृष्टेऽपि बिभिमः। आबाल्याद् गृहीतव्रताः पापभीरवः, परं भारतीप्रभावप्रभववचनशक्त्या रसान् सर्वान् जीवद्रूपानिव दर्शयामः। राजन्! 10 मोढेरके यैस्ते वात्स्यायनभावा व्याख्याताः, ते वयं नन्नसूरय इमे च गोविन्दाचार्याः। भवतां तदा मृषा विकल्पः समजनि। राजा सद्यो ललज्जे। तौ सूरी क्षमयामास, आनर्च बप्पभट्टिं च। तौ कतिचिद्दिनानि उपराजं स्थित्वा बप्पभट्टेरनुज्ञया पुनर्मोढेरपुरमगाताम्। गतः समयः कियानपि।

§ ४५) अन्यदा गाथकवृन्दमागतम्। तन्मध्ये बालिकैका सनालनीलोत्पललोचना मृगाङ्कमुखी 15 किन्नरस्वरा विदुषी गायति। तां दृष्ट्वा मदनशरज्वरजर्जरः गलितविवेको गतप्रायशौचधर्माभिनिवेशः कन्यकुब्जेशः पद्यद्वयं प्रभुप्रत्यक्षमपाठीत्-

१०९. वक्त्रं पूर्णशशी सुधाधरलता दन्ता मणिश्रेणयः, कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः।
वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा, तत्किं चन्द्रमुखि! त्वदर्थममरैरामन्थि दुग्धोदधिः ॥४९॥

११०. जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो, दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति।
20 विश्वप्रार्थ्यः सकलसुरभिद्रव्यदर्पापहारी, नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः ॥ ५० ॥

सूरिभिश्चिन्तितम्-अहो! महतामपि किदृग् मतिविपर्यासः?।

१११. भस्त्रा काचन भूरिरन्ध्रविगलत्तन्मलक्लेदिनी, सा संस्कारशतैः क्षणार्द्धमधुरां बाह्यामुपैति द्युतिम्।
अन्तस्तत्त्वरसोर्मिधौतमतयोऽप्येतां तु कान्ताधिया, श्लिष्यन्ति स्तुवते नमन्ति च पुरः कस्मात्र पृत्कुर्महे ॥५१॥

उत्थिता सभा। त्रिभिर्दिनैर्भूपेन पूर्बहिः सौधं कारितम्, मातङ्गीसहितोऽत्र वत्स्यामीति 25 धिया। तदवगतं श्रीबप्पभट्टिसूरिभिः। ध्यानप्रत्यक्षं हि तेषां जगद्वृत्तम्। ततो माऽसौ कुकर्मणा नरकं यासीदिति कृपया तैर्निष्पाद्यमानसौधभारपट्टे निशि खटिकया बोधदानि पद्यानि लिखितानि। यथा-

११२. शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता, किं ब्रूमः शुचितां भवन्त्यशुचयस्त्वत्सङ्गतोऽन्ये यतः।
किंवाऽतः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां, त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥५२॥

30 ११३. *सद्वृत्त सद्गुण महार्घ्य महार्हकान्त कान्ताघनस्तनतटोचितचारुमूर्ते!।
आः पामरीकठिनकण्ठविलग्नभग्न हा हार! हारितमहो भवता गुणित्वम् ॥ ५३ ॥

1 E शस्त्रझणत्कार। 2 B हन हन। 3 ABD बिभ्म। 4 P तमाल०। 5 P तद्। 6 CP मदनज्वर०। 7 B कस्तूरिकायाम्। 8 PC तु। 9 B कारापितम्। 10 BP नास्ति। 11 P नरकमयासी०। 12 BD किंवातः।
* BD आदर्शे नास्ति पद्यमिदम्।

११४. जीयं जलबिन्दुसमं संपत्तीओ तरंगलोलाओ । सुमिणयसमं व पिम्मं जं जाणसि तं करिज्जासि ॥ ५४ ॥

११५. लज्जिज्जइ जेण जणे मइलिज्जइ निअकुलक्कमो जेण । कंठट्ठिए वि जीए तं न कुलीणेहिं कायव्वं ॥ ५५ ॥

प्रातरमूनि पद्यानि स्वयमामो ददर्श । वर्णान् कवित्वगतिं च उपलक्षयामास । अहो गुरूणां मयि कृपा! अहोतमां मम पापाभिमुखता !-इति ललज्जे । दध्यौ च-साङ्कल्पिकमिदं जनङ्गमीसङ्गमपापं मयाऽऽचरितम् । भारितोऽहं क्व यामि ?, किं करोमि ?, कथं गुरोर्मुखं दर्शयामि ?, किं तपः समाचरामि ?, किं तीर्थं सेवे ? । ऊर्ध्वं मुखं गृहीत्वा गच्छामि ?, कूपे पतामि ?, शस्त्रेणात्मानं घातयामि ? । अथवा ज्ञातम्-सर्वजनसमक्षं पापमुद्दीर्य काष्ठानि भक्षयामि । एवं टलवलायमानोऽनुचरानादिदेश-अग्निं प्रगुणयत । प्रगुणितस्तैरग्निः । समागताः श्रीबप्पभट्टिसूरयः । मेलितं चातुर्वर्ण्यम् । उक्तं तदघम् । यावत्सहसा कृशानुं[1] प्रवेक्ष्यति आमस्तावत्सूरिभिर्बाहौ धृत्वोक्तः-राजन् ! शुद्धोऽसि । मा स्म खिद्येथाः । त्वया हि सङ्कल्पमात्रेण तत्पापं कृतं न साक्षात् । सङ्कल्पेनाग्निमपि प्रविष्टोऽसि । चिरं धर्मं कुरु ।

११६. मनसा मानसं कर्म वचसा वाचिकं तथा । कायेन कायिकं कर्म निस्तरन्ति मनीषिणः ॥ ५६ ॥

इति वचनाद्विसृष्टोऽग्निः । जीवितो राजा । तुष्टो लोकः । प्रीतः सूरिः ।

§४६) समयान्तरे वाक्पतिराजो मथुरां ययौ । तत्र श्रीपादस्त्रिदण्डी जज्ञे सः । तल्लोकादवगम्य आमः सूरीन् बभाषे-भवद्भिरहमपि श्रावकः कृतः । दिव्या वाणी वः प्रसन्नैव । जानामि वः शक्तिपरमरेखां यदि वाक्पतिमप्यार्हतदीक्षां ग्राहयथ । आचार्यैः[2] प्रतिज्ञा चक्रे-तदा विद्या मे प्रमाणं यदि वाक्पतिं सशिष्यं श्वेताम्बरं कुर्वे । वाक्पतिस्तु क्वास्ति, इति उच्यताम् । राज्ञोक्तम्-मथुरायां विद्यते । सूरयो मथुरायां गता बहुभिः श्रीआमासनरैः सह । वराहमन्दिराख्ये प्रासादे ध्यानस्थं वाक्पतिं गत्वाऽद्राक्षुः । तत्पृष्ठस्थैः सूरिभिस्तारस्वरेण आशिर्वादाः पठितुमारब्धाः-

११७. सन्ध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे, धत्से यच्च परां[3] विलज्ज ! शिरसा तच्चापि सोढं मया ।
श्रीर्जाताऽमृतमन्थनाद्यदि[4] हरेः कस्माद्विषं भक्षितं, मा स्त्रीलम्पट ! मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥५७॥

११८. एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः, पार्वत्या विपुले नितम्बफलके शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं, शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ५८ ॥

११९. रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु,-र्वाचा पञ्चवटीवने विचरतस्तस्याहरद्रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुंकारिणः शृण्वतः, पूर्वस्मर्तुरवन्तु कोपकुटिला भ्रूभङ्गुरा दृष्टयः ॥ ५९ ॥

१२०. उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्या[5] ।
सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ६० ॥

एवं बहु पेठे । अथ वाक्पतिर्ध्यानं विसृज्य सम्मुखीभूय सूरीनाह-हे बप्पभट्टिमिश्राः ! यूयं किमस्मत्पुरतः शृङ्गाररौद्राङ्गं पद्यपाठं कुरुध्वे ? । बप्पभट्टयः प्राहुः-भवन्तः सांख्याः ।

१२१. सांख्या निरीश्वराः केचित् केचिदीश्वरदेवताः । सर्वेषामपि तेषां स्यात् तत्त्वानां पञ्चविंशतिः ॥ ६१ ॥

---

1 PC कांपि । 2 AB भावादेन्द्रैः । 3 P नहीं । 4 BD मन्थने यदि । 5 P ... ।

इति ज्ञात्वा भवदभिमतदेवताशिषः पठन्तः स्म। यथारुचि हि श्रोतुः पुरः पठनीयं समयज्ञैः। वाक्पतिराह–यद्यप्येवं तथापि मुमुक्षवो वयमासन्ननिधनं ज्ञात्वा इह परमब्रह्म ध्यातुमायाताः स्म। बप्पभट्टयो जगदुः–किं तर्हि रुद्रादयो मुक्तिदातारो न भवन्तीति मनुध्वे?। वाक्पतिः प्राह–एवं सम्भाव्यते। बप्पभट्टयो बभाषिरे–तर्हि यो मुक्तिदानक्षमस्तं शृणु। पठामि।
5 स जिन एव।

१२२. मदेन मानेन मनोभवेन क्रोधेन लोभेन ससम्मदेन।
पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ॥ ६२ ॥

१२३. जं दिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं, आयारो पसमायरो परियरो संतो पसन्ना[1] तणू।
तं मन्ने जरजम्ममच्चुहरणो देवाहिदेवो जिणो[2], देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ ६३ ॥

10 इत्यादि बहु पेठे। वाक्पतिः प्राह–स जिनः क्वास्ते?। सूरिः–स्वरूपतो मुक्तौ मूर्तितस्तु जिनायतने। वाक्पतिर्ब्रूते–प्रभो! दर्शय तम्। प्रभुरपि आमनरेन्द्रकारिते प्रासादे तं निनाय। स्वयं प्रतिष्ठितवरं श्रीपार्श्वनाथमदीदृशत्। शान्तं कान्तं निरञ्जनं रूपं दृष्ट्वा प्रबुद्धो बभाषे[3]–अयं निरञ्जनो देव आकारेणैव लक्ष्यते। तदा[4] बप्पभट्टिसूरिभिर्देव-गुरु-धर्मतत्त्वान्युक्तानि। रञ्जितः सः। मिथ्यात्ववेषमुत्सृज्य जैन ऋषिः श्वेताम्बरोऽभूत्। जिनमथ[?]वन्दिष्ट, अपाठीच–

15 १२४. मयनाहिं[5]सुरहिएणं इमिणा किं किर[6] फलं णलाडेणं। इच्छामि अहं जिणवर! पणामकिणकलुसियं काउं ॥६४॥

१२५. दोवि गिहत्था धडहड वच्चइं को किर कस्स वि पत्त भणिज्जइं।
सारंभो सारंभं पुज्जइ कद्दमु कद्दमेण किमु[7] सुज्झइ ॥ ६५ ॥

प्रत्यासन्ने[8] आयुषि [9]मथुराचातुर्वर्ण्यस्य आमभूपसचिवलोकस्य च प्रत्यक्षं अष्टादशपापस्थानानि त्याजितः। नमस्कारं पञ्चपरमेष्ठिमयं श्रावितः। जीवेषु क्षामणां कारितो वाक्पतिः सुखेन
20 त्यक्ततनुर्दिवमगमत्। तत्सर्वं प्रधानैरन्यैरपि प्रथमं ज्ञापितो नृपः। पश्चाद्बप्पभट्टिर्गोपगिरिं गतः। राजाभितुष्टुवे[10] सूरिशक्रम्–

१२६. आलोकवन्तः सन्त्येव भूयांसो भास्करादयः। कलावानेव तु ग्रावद्रावकर्मणि कर्मठः ॥ ६६ ॥

§ ४७) एकदा राज्ञा सूरिः पृष्टः–किं कारणं येनाहं ज्ञातजैनतत्त्वोऽपि अन्तराऽन्तरा तापसधर्मे रतिं दधामि?। सूरिराह–प्रातर्वक्ष्यामः। प्रातरागताः प्रोचुः–राजन्! अस्माभिर्भारतीवचसा तव
25 प्राग्भवो ज्ञातः। त्वं कालिञ्जरगिरेस्तीरे शालनामा तपस्वी शालद्रुमाधोभागे ह्युपवासान्तरितभोजनस्तपो बहूनि वर्षाण्यतपथाः"। स मृत्वा त्वमुत्पन्नः। तस्यातिदीर्घा जटास्तत्रैव लतान्तरिता अद्यापि सन्ति"। तदाकर्ण्य आसनरास्तत्र राज्ञा प्रहिताः। तैर्जटा आनीताः। सूरिवाक्संवादो दृष्टः। भूपतिः सूरीणां पदोर्विलग्य तस्थौ। परमार्हतो बभूव।

§ ४८) अन्यदा सौधोपरितलस्थेन आमेन क्वापि गृहे भिक्षार्थं प्रविष्टो मुनिर्दृष्टः। तत्र युवति-
30 रेका कामार्त्ता गृहागतं मुनिं परब्रह्मैकचित्तं रिरमयिषुः कपाटसम्पुटं ददौ। मुनिर्नेच्छति ताम्। तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं काकतालीयन्यायादन्धवर्त्तकी[12]न्यायाच[13]। राजा तद् दृष्ट्वा सूरये समस्यां ददौ–

---

1 A पसंता। 2 P इमो। 3 P बभाण। 4 AB तथा। 5 P मयनाए। 6 P कर। 7 PC किम। 8 ABD प्रत्यासन्ने; P अन्यासन्ने। 9 A 'मथुरा' नास्ति। 10 P राजा तुष्टतुष्टुवे। 11 AB तद्वत्ता। 12 P॰त्यक्षि। 13 P न्यायेन।

१२७. कवाडमासज्ज वरंगणाए अब्भत्थिओ[1] जुव्वणगव्वियाए ।

सूरिः पुरः[2] प्राह-

न मन्नियं तेण जिइंदिएण सनेउरो पव्वइअस्स पाओ ॥ ६७ ॥

अन्यदा[3] प्रोषितभर्तृकाया गृहे भिक्षुः कश्चिद् भिक्षार्थी प्रविष्टः । राज्ञा सौधाग्रस्थेन दृष्टः । तया भिक्षोः पारणायान्नमानीतम् । उपरि काकैर्भक्षितम् । मुनिकस्य दृष्टिस्तस्या नाभौ स्थिता[4] 5 तस्यास्तु दृष्टिस्तन्मुखकमले । आमः सूरये समस्यामार्पिपत्[5] । यथा-

१२८. भिक्खयरो पिच्छइ नाभिमंडलं सावि तस्स मुहकमलं ।

सूरिराह-

दुण्हं पि कवालं चडुयं पि काया विलुंपन्ति ॥ ६८ ॥

इति आमः श्रुत्वा चमत्कृतः । अहो सर्वज्ञपुत्रका एते ! । 10

§४९) अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वा उपभूपं गतः । बप्पभट्टिना श्लाघिता तत्कला । नृपात्तेन टङ्कलक्षं लेभे । लेप्यमयबिम्बचतुष्टयं च कारितम् । एकं मथुरायाम् । एकं मोढेरवसहिकायामणहिल्लपुरे । एकं गोपगिरौ । एकं सतारकाख्यपुरे । तत्र तत्र प्रतिष्ठाः प्रभावनाश्च कारिताः । अन्यदपि बहुकारि ।

§५०) अथ आमगृहे पुत्रो जातः सुलक्षणः । सोत्सवं तस्य दुन्दुकः इति नाम प्रतिष्ठितम् । सोऽपि 15 युवत्वे तैस्तैर्गुणैः पितृवत्पप्रथे । एकदा समुद्रसेनभूपाधिष्ठितं राजगिरिनामदुर्गं आमो रुरोध । अमितं सैन्यं कुद्दालादिसामग्री भैरवादयो यन्त्रभेदाः कृप्ताः[6] । प्राकारोऽतिबलेन प्रपातयितुमारेभे । नापतत् । आमः खिन्नः । तेन सूरयः पृष्टाः-अयमभ्रंलिहः प्राकारः कदाऽस्माभिर्ग्रहीष्यते ? । सूरिभिर्बभाषे-तव पुत्रपुत्रो भोजनामाऽमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव । आमस्त्यक्तारम्भः प्राकाराद्बहिर्द्वादशाब्दीमस्थात् । शत्रुदेशमात्मसाच्चक्रे । दुन्दुकगृहे पुत्रो जातः । 20 तस्य भोज नाम ददे । स जातमात्रः पर्यङ्किकान्यस्तो[7] दुर्गद्वाराग्रमानीतः प्रधानैः । तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो विशीर्णः । समुद्रसेनभूपो धर्मद्वारेण निःसृतः । आमो राजगिरिमविक्षत् । प्रजामारो न कृतः । अक्रूरा हि जैना राजर्षयः[8] । दयापरास्ते । रात्रौ आमाय राजगिर्यधिष्ठात्र्या[9] भणितम्-राजन् ! यदि त्वमत्र स्थास्यसि तदा तव लोकं हनिष्यामि । आमः प्रत्यूचे -लोकेन हतेन किं ते फलम् ? । यदि हनिष्यसि तदा मामेव घातय । एतन्निर्भयमामवचः श्रुत्वा 25 तुष्टो व्यन्तर उवाच-प्रीतोऽस्मि ते सत्त्वेन । याचस्व किञ्चित् । राजोचे-न किमपि न्यूनं मे; केवलं कदा मे मृत्युः, ब्रूहीदम् । व्यन्तर उवाच-षण्मासावशेषे आयुषि स्वयमेत्य वक्ष्यामि । षण्मासावशेषे आयुषि पुनरागतः सः । राज्ञोक्तम्-कियन्मे आयुः ? । व्यन्तरो वदति-देव !

१२९. गङ्गान्तर्मागधे तीर्थे नावाऽवतरतः सतः । मकाराद्यक्षरग्रामोपकण्ठे मृत्युरस्ति ते ॥ ६९ ॥

षण्मासान्ते इति विद्याः । पानीयान्निर्गच्छन्तं धूमं यदा द्रक्ष्यसि तदा मृत्युर्ज्ञातव्यः । साधना 30 च कार्या पारलौकिकी । इति गदित्वा गतो देवजातीयः । राजा प्रातः सूरिपार्श्वं गतः । सूरिरुवाच-

1 A अब्भट्ठिओ; P अब्भुट्ठिओ । 2 P 'पुरः' नास्ति । 3 A अन्यदिने । 4 P पतिता । 5 A अर्पितवान् । 6 P कल्पिताः । 7 P॰कान्यामे । 8 P महर्षयः राजर्षयश्च । 9 A अधिष्ठात्र्या ।

१ प्र० को०

राजन्! यद्व्यन्तरेण 'तथाऽग्रे कथितं आयुःप्रमाणं तत्तथैव। धर्मपाथेयं गृह्णीयाः'[1]। तदाकर्ण्य भूपस्तुतोष विसिस्मिये[2] च, अहो ज्ञानम्! । अथवा विस्मय एव कः ?–सूर्यो तेजस्वी, इन्दुराह्लादकः, गङ्गाम्भः पावनम्, जैना ज्ञानिन इति। दिनद्वये गते सूरिः श्रीआमस्य पुरः प्रसङ्गेन श्रीनेमिनाथस्याशीर्वादं पपाठ। यथा–

5 १३०. लावण्यामृतसारसारणिसमा सा भोजसूः[4] खेहला, सा लक्ष्मीः स नवोद्गमस्तरुणिमा सा द्वारिका तद्बलम्।
ते गोविन्दशिवासमुद्रविजयप्रायाः प्रियाप्रेरकाः, यो जीवेषु कृपानिधिर्व्यधित नोद्वाहं स नेमिः श्रिये ॥ ७० ॥

भूयोऽपि–

१३१. मग्नैः कुटुम्बजम्बाले यैर्मिथ्याकार्यजर्जरैः। नोज्ञयन्ते नतो नेमिस्ते चेज्जीवन्ति के मृताः ॥ ७१ ॥

§ ७.१) तथा रैवतकतीर्थमहिमा सूरिभिर्व्याख्याय पल्लवितः यथा, भूमिमाहत्योत्थाय परिकरं
10 बद्ध्वा सरभसं भूपः प्रतिशुश्राव–रैवतके नेमिमवन्दित्वा मया न भोक्तव्यमिति। लोकैर्निषिद्धः–राजन्! मा मा, दूरे रैवतको गिरिः, मृदवो भवादृशाः। राजाऽह–प्रतिज्ञातं मे न चलति। ततः सह सूरिणा आमः [*लक्षमेकं पृष्ठवाहा वृषभाः, करभसहस्र २०, हस्तिशत ७, अश्वलक्षमेकं, पदातिलक्षत्रयं, श्राद्धकुटुम्बसहस्र २०] सारसैन्यो[5] रैवतकायाचालीत्। स्तम्भतीर्थं यावद्गतः, तावत्[6] क्षुत्तापेन व्याकुलितोऽपि प्राणसन्देहं प्राप्तोऽपि नाहारमग्रहीत्। भीतो लोकः।
15 खिन्नः सूरिः। मन्त्रशक्त्या कूष्माण्डीं देवीं साक्षादानिनाय। तदग्रे कथयामास–तत्कुरु येन राजा जेमति जीवति च। तद्वचनात्कूष्माण्डी बिम्बमेकं महच्छिरसा बिभ्रती गगनेन आमसविधं गता, ऊचे च–वत्स! साऽहमम्बिका। तव सत्त्वेन तुष्टा। गगने आगच्छन्तीं मां त्वं साक्षाद्द्राक्षीः। मयेदं रैवतैकदेशभूतादवलोकनाशिखरान्नेमिनाथबिम्बमानीतम्। इदं वन्दस्व। अस्मिन्वन्दिते मूलनेमिर्वन्दित एव। कुरु पारणकम्। सूरिभिरपि तत्समर्थितम्। लोकेनापि स्थापि-
20 तम्। तद्बिम्बं वन्दित्वा राज्ञा ग्रासग्रहणं चक्रे। अद्यापि तद्बिम्बं स्तम्भतीर्थे पूज्यते। उज्जयन्त इति प्रसिद्धं तत्तीर्थम्। इत्यातोद्यानि ध्वानयन्नामो विमलगिरौ वृषभध्वजं सोत्सवं वन्दित्वा यावद्रैवताद्रिं गतः, तावता तत्तीर्थं दिगम्बरैः रुद्धं श्वेताम्बरसंघः प्रवेष्टुं न लभते। आमेन तज्ज्ञातम्। ज्ञात्वोचे–युद्धं कृत्वा निषेद्धॄन्हत्वा श्रीनेमिं नंस्यामि। तावत्तत्र दिगम्बरभक्ता एकादश राजानो मिलिताः। सर्वे युद्धैकतानास्तदा बप्पभट्टिना भणितम्–आमराजेन्द्र! धर्मकार्ये पापा-
25 रम्भः कथं क्रियते ?। लीलयैव तीर्थमिदमात्मसात्करिष्ये। भवद्भिः स्थिरैः स्थेयम्। एवं भूपं प्रबोध्य बप्पभट्टिरुपदिगम्बरं †उपतद्भक्तं भूपं च नरं प्रहित्याचभाणत्–इदं तीर्थं यस्याम्बिका दत्ते तस्य पक्षस्य सत्कमिति मन्यध्वे। तैरुक्तम्–युक्तमेतत्। ततो बप्पभट्टिना† सुराष्ट्रावास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्यकाः पञ्चसप्तवार्षिक्यो मेलिताः। मिलिताः सभ्याः। बप्पभट्टिना अम्बादेवीपार्श्वात्कथापितम्–यदि सर्वाः श्वेताम्बरश्रावककन्यकाः

30 १३२. उज्जितसेलसिहरे दिक्खा नाणं निसीहिया जस्स। तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ७२ ॥

इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थं, पक्षान्तरे तु दिगम्बरीयमिति। तत आनीता

---

1 P चोऽग्रे। 2 P गृह्णीथाः। 3 A विसिस्म॰। 4 P भोजभूः। * P पुस्तक एवेयं पंक्तिर्दृश्यतेऽतः प्रक्षिप्तप्राया मन्तव्या। 5 BD ॰सैन्यैः; P ॰सैन्यैर्द्वात्रिंशदुपवासैः। 6 P तत्र। † एतच्चिह्नान्तर्गतः पाठः ABD आदर्शे न दृश्यते, परं CEP आदर्शे उपलभ्यते।

303 अ

मुग्धबालिकाः। सर्वाभिः श्वेताम्बरपक्षबालिकाभिः पठिता सा गाथा। अपरासु तु नैकयाऽपि। ततो जातं श्वेताम्बरसाद्रैवततीर्थम्। अम्बिकया स्वस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता। ततो दृष्टा[1] दिक्पटा महाराष्ट्रादिदक्षिणदेशानगमन्। राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात्तत्र मिलितैर्नेमिर्नेमे। वित्तं ददे। प्रभासे चन्द्रप्रभः प्रणेमे। बन्दिमोक्षः सर्वत्रापि कारितः। आमस्य भुक्तौ गूर्जरादिदेशास्तदा तीर्थानां चिरं पूजोपयोगिनो हट्टाद्यायाः प्रक्लृप्ताः। एवं कार्याणि कृत्वा ससूरिर्नृपो गोपगिरिं प्राविशत्। संघपूजादिमहास्तत्र नवनवाः। प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः। आपृष्टः सः। लोकोऽपि क्षमितः। अनृणो देशः कृतः। सह सूरिणा नावाऽऽरूढो गङ्गासरित्तीरे[2] तीर्थं मागधं गतः। तत्र जले धूमं दृष्टवान्। तदा सूरीन्द्रमक्षमयत्। संसारमसारं विदन् अनशनमगृह्णात्। समाधिस्थः श्रीविक्रमकालात् अष्टशतवर्षेषु नवत्यधिकेषु व्यतीतेषु भाद्रपदे शुक्लपञ्चम्यां पञ्च परमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात्। सूरयस्तत्त्वज्ञा अपि रुरुदुः। चिरप्रीतिमोहो दुर्जय एव। सेवकास्तु चक्रन्दुः—हा शरणागतरक्षावज्रकुमार! हा राजस्थापनादाशरथे! हा अश्वदमननल! हा सत्यवाग्युधिष्ठिर! हा हेमदानकर्ण! हा मज्जाजैन[3]श्रेणिक! हा सूरिसेवासम्प्रते! हा अनृणीकरणविक्रमादित्य! हा वीरविद्याशातवाहन! अस्मान् विहाय क गतोऽसि?। दर्शयैकदाऽस्मभ्यमात्मानम्। मैकाकिनो मुञ्च[4]। एवं विलपन्तस्ते सूरिभिः प्रतिबोधिताः—भो भो! सत्यं[5] दैवेन पापेन—

> १३३. आलब्धा कामधेनुः सरसकिशलयश्चन्दनश्चूर्णितो हा
> छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः।
> दग्धः कर्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला
> भग्नः कुम्भः सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम् ॥ ७३ ॥

तथापि मा शोचत शोचत। यतः—

> १३४. पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य नैशं तमः, कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा।
> मध्याह्ने सरितां जलं प्रविसृते[6] रापीय दीप्तैः करैः, सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत् ॥७४॥

इति लोकं निःशोकं कृत्वा लोकेन सह सूरिर्गोपगिरिमागात्। सूरिभिर्दुन्दुको राजा आमेन आमशोकेन जात्यमुक्ताफलस्थूलानि अश्रूण्युद्गिरन् हिमम्लानपद्मदीनवदनश्चिन्ताचान्तस्वान्तो बभाषे—राजन्! कोऽयं महतस्तव पितृशोकः। स हि चतुर्वर्गं संसाध्य कृतकृत्यो बभूव। यशोमयेन देहेन चाचन्द्रं[7] जीवन्नेवास्ते[8]। पुण्यलक्ष्मीः कीर्तिलक्ष्मीश्चेति द्वे नरस्योपकारिण्यौ वल्लभे!

> १३५. पुण्यलक्ष्म्याश्च कीर्तेश्च विचारयत चारुताम्। स्वामिना सह यात्येकाऽपरा तिष्ठति पृष्ठतः ॥ ७५ ॥

अन्योऽप्येवंविधः कोऽपि भवतु। इत्येवंविधाभिर्वाग्भिर्दुन्दुकराजं सूरिराजो निःशोकमकार्षीत्। दुन्दुकः शनैः शनैः परमार्हतोऽभूत्। राजकार्याणि अकार्षीत्। त्रिवर्गं स समसेविष्ट।

§५२) एवं वर्त्तमाने काले, एकदा दुन्दुकश्चतुष्पथे गच्छन् कण्टिकां नाम गणिकामुदाररूपां चिद्रूपां युवजनमृगवागुरां मदनमायामयीमालोकिष्ट। तां शुद्धान्तस्त्रीमकार्षीत्। तया दुन्दुकस्तथा वशीकृतो यथा यदेव सा वदति तत्सत्यम्; यदेव सा करोति तदेव हितं मनुते। सा तु का-

---

1 A नष्टा। 2 A तीर्थं। 3 BP जैनत्व०। 4 A मा मुचः। 5 AB सत्यं। 6 P प्रविशतैः। 7 P नास्ति। 8 A जीवन्नास्ते।

णकारिणी वाक्पटुः सर्वं राज्यं ग्रसते हिमानीव चित्रम् । भोजमातरं पद्मां नाम अन्या अपि राज्ञीरन्वयवतीर्विनयवतीर्लावण्यवतीस्तृणाय मनुते । एकदा कलाकेलिनामा ज्योतिषिको निशि विसृष्टे सेवकलोके दुन्दुकराजं विजनं दृष्ट्वाऽवादीत्–देव ! वयं भवत्सेवकत्वेन सुखिनः ख्याताः श्रीशाश्च । यथातथं[1] ब्रूमः–अयं ते भोजनामा तनयो भाग्याधिकस्त्वां हत्वा तव राज्ये निवे-
5 क्ष्यते । यथार्हं स्वयं कुर्वीथाः । राजा तदवधार्य वज्राहत इव क्षणं मौनी तस्थौ । ज्योतिषिकं विससर्ज । सा वार्ता भोजजननीसहचर्या दास्यैकया विपुलस्तम्भान्तरितया श्रुता । भोजमात्रे चोक्ता । सा पुत्रमरणाद्बिभाय । राजापि कण्टिकागृहमगात् । सापि राजानं सचिन्तमालोक्याऽलापीत्–देव ! अद्य कथं म्लानवदनः ? । राजाऽऽह स्म–किं क्रियते ?, विधिः कुपितः । पुत्रान्मे मृत्युर्ज्ञानिना दृष्टप्रत्ययशतेन कथितः । कण्टिका वदति स्म–का चिन्ता, मारय पुत्रम् । सुत-
10 मपि निर्दलयन्ति राज्यलुब्धाः । सुतो न सुतः । सुतरूपेण शत्रुरेव सः । तद्वचनाद्दुन्दुकः सुतं जिघांसामास । यावता घातयिष्यति तावता भोजमात्रा पाडलीपुरे[2] स्वभ्रातॄणां सूराणां राज्यश्रीस्वयंवरमण्डपानां स्नेहलानां धर्मज्ञानामग्रे प्रच्छन्नैर्नरैर्लेखेन ज्ञापितम्, यथा–एवमेवं भवतां भागिनेयो विनंक्ष्यति । रुष्टो[4] राजा । आगत्य एनं गृहीत्वा गच्छत[5] । रक्षतां[6] जीववत् । मा स्माहं भवत्सु सत्सु निष्पुत्राऽभूवम्–इति । तेऽप्यागच्छन्, दुन्दुकमनमन् । उत्सवमिषेण भागिनेयं
15 भोजं गृहीत्वा पाटलीपुत्रमगमन् । तत्र तमपीपठन्, अलीललन्[8] । शस्त्राभ्यासमचीकरत् । जीववदमंसत । तत्र तस्य पञ्चाब्दी दिनैः कतिभिरप्यूनाऽतिक्रामति स्म । कण्टिका दुन्दुकाग्रे कथयति स्म–देव ! पुत्ररूपस्ते शत्रुर्मातृशाले वर्द्धते । नखच्छेद्यं पर्शुच्छेद्यं मा कुरु । अत्रानीय च्छन्नं यमसदनं नय । राजाऽऽह–सत्यमेतत् । ततो दूतमुखेन [9]दुन्दुको भोजं तन्मातुलेभ्योऽयाचीत् । ते भोजं नार्पयन्ति । पुनः पुनः स्वान् दूतान् दुन्दुकः प्रहिणोति । भोजमातुलाः प्राहुः–राजन् !
20 वयं तव भावं विद्मः, नार्पयाम एवैनम् । धर्मपात्रमसौ । अन्योऽपि शरणागतो रक्ष्यः क्षत्रियैः, किं पुनरीदृग् भगिनीपुत्रः ? । बलात्कारं ब्रूपे चेत्, युद्धाय प्रगुणीभूयागच्छेः । भगिनीपतये चमत्कारं दर्शयिष्यामः । तद्दूतैरागत्योक्तम् । दुन्दुकः कुपितोऽपि तान् हन्तुं न क्षमः ॥‡ भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापितः कथञ्चन उपपितृ नैति । ततो दुन्दुकेन बप्पभट्टिसूरयः प्रार्थिताः–यूयं गत्वा भोजं सुतमनुनीयानयत मानयत माम् । अनिच्छन्तोऽपि तत्सैनिकैः सह पाटलीपुत्रं चेलुः ।
25 अर्द्धमार्गं सम्प्राप्तैः स्थित्वा विमृष्टं ज्ञानदृष्ट्या–भोजस्तावन्मम वचसा नृपसमीपं नैष्यति । आनीयते वा यथा तथा; तदानीतोऽपि पित्रा हन्यते । वागलङ्घने राजाऽपि क्रुद्धो मां हन्ति । तस्मादितो व्याघ्र इतो दुस्तटी इति न्यायः प्राप्तः । समाप्तं च ममायुः, दिवसद्वयमवशिष्यते, तस्मादनशनं शरणम्–इति विमृश्यासन्नस्थयतयो भाषिताः–नन्नसूरि-गोविन्दाचार्यौ प्रति हिता भवेत । श्रावकेभ्यो मिथ्यादुष्कृतं ब्रूयात् । परस्परममत्सरतामाद्रियेध्वम् । क्रियां पालयेत ।
30 आबालवृद्धान् लालयेत । नो वयं युष्मदीयाः, न यूयमस्मदीयाः । सम्बन्धाः कृत्रिमाः सर्वे । इति शिक्षयित्वाऽनशनस्थाः समतां प्रपन्नाः ।

१३६. अर्हतस्त्रिजगद्वन्द्यान् सिद्धान् विध्वस्तबन्धनान् । साधूंश्च जैनधर्मं च प्रपद्ये शरणं त्रिधा ॥ ७६ ॥

---

1 ABD तथातथं । 2 A ॰पुत्रे । 3 P 'नरैः' नास्ति । 4 B राजा रु॰ । 5 P आगच्छत । 6 P रक्षति । 7 P निष्पुत्रो । 8 AB अलीलपन् । 9 A दुन्दकः । 10 AB मातुलपार्श्वं । ‡ एतच्चिह्नान्तर्गतः पाठः पतितः P पुस्तके ।

१३७. महाव्रतानि पञ्चैव षष्ठकं रात्रिभोजनम् । विराधितानि यत्तत्र मिथ्यादुष्कृतमस्तु मे ॥ ७७ ॥

इति ब्रुवाणा आसीना अदीनाः कालमकार्षुः । श्रीबप्पभट्टिसूरीणां श्रीविक्रमादित्यादष्टशत-वर्षेषु गतेषु भाद्रपदे शुक्लतृतीयायां रविदिने हस्तर्क्षे[1] जन्म, पञ्चनवत्यधिकेषु तेषु गतेषु स्वर्गा-रोहणम् । तदैव मोढेरे नन्नसूरीणामग्रे भारत्योक्तम्–भवद्गुरव ईशानदेवलोकं गताः । तत्र बाढं शोकः प्रससार । 5

१३८. शास्त्रज्ञाः सुवचस्विनो बहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः ।
सर्वस्याभिमता गुणैः परिवृता भूमण्डनाः सज्जना
धातः ! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः ॥ ७८ ॥

वृद्धैस्तु प्रबोधो दत्तः– 10

१३९. हित्वा जीर्णमयं देहं लभते भो पुनर्नवम् । कृतपुण्यस्य मर्त्यस्य मृत्युरेव रसायनम् ॥ ७९ ॥

इति । दुन्दुकेन सूरिभिः सह प्रहिता ये सैनिकास्ते निवृत्य दुन्दुकपार्श्वे गताः । सोऽपि पश्चात्ता-पानलेन दन्दह्यते स्म । भोजेनापि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां मुखादवगतं यथा–सूरय एवं मम्रुः । तत्र पार्श्वे नाजग्मुः । मा स्मायमसदुपरोधसङ्कटे पतितः पितुः पार्श्वे गतः सन् मृत इति कृपां दधुः[2] । तदेतदाकर्ण्य भोजस्तथा पीडितो यथा वज्रपातेनापि न पीड्यते । 15 पितुरन्तिकं नागादसौ ।

§५३) एकदा मालिकः कोऽपि पूर्वमामराजभृत्यो विदेशं भ्रमित्वा[3] भोजान्तिकमागतः पाटलीपुरे । तेनोक्तम्–देव ! त्वं मत्स्वामिकुलप्रदीपः । मया विदेशे सद्गुरोर्मुखाद्विद्यैका लब्धा मातुलिङ्गी नाम, ययाऽभिमन्त्रितेन मातुलिङ्गेन हताः करि-हरिप्राया अपि बलिनो म्रियन्ते, मानवानां तु का कथा । देव ! गृहाण ताम् । भोजेन सा तस्मादात्ता । प्रमाणिता; सत्या । 20 मालिको दानमानाभ्यां भोजेन रञ्जितः । मातुलाः सर्वे भोजेन विद्याशक्तिं प्रकाश्य तोषिताः । त ऊचुः–यदि इयं ते शक्तिस्तदा प्राभृतमिषेण मातुलिङ्गानि गृहीत्वाऽस्माभिः सह पितुः समीपं व्रज । पितरं निपात्य राज्यं गृहाण । तद् रुरुचे भोजाय । चलितो बहुमातुलिङ्गशाली[4] सन् । गतः पितुर्द्वारम्, कथापितं च–तात ! त्वं पूज्योऽहं शिशुः । त्वत्तो मरणं वा राज्यं वा सर्वं रम्यं मे । राजा सन्तुष्टः । अहो विनीतः सुतः, आयातु–इति विमृश्य आहूतो भोजः । शोधितो 25 मध्यमागतः । एकासनस्थौ कण्टिका-राजानौ पृथक्पृथग् मातुलिङ्गेन जघान । सम्यग्विद्या हि नान्यथा । उपविष्टो दुन्दुकराज्ये भोजः । तन्मातुला अतुलं तोषं दधुः । माता पद्मा प्रससाद । दुन्दुकेन धनहरणेन ग्रासोद्दालनादिना दूनचरा राजन्यकाः पुनर्जातमात्मानं मेनिरे । महाजनो जिजीव । वर्णाः सर्वे उन्मेदुः । संसारसरोऽम्भोजं भोजं कमला भेजे । दोर्बलात्परिच्छदबलाच्च जगज्जिगाय । 30

§५४) अथ कृतज्ञतया मोढेरपुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरान् प्रैषीत् । ते गतास्तत्र । विज्ञप्तिर्दर्शिता तैस्तत्र । वाचिता नन्नसूरि-गोविन्दाचार्यैर्यथा–स्वस्ति श्रीमोढेरे परमगुरुश्रीनन्न-सूरि-श्रीगोविन्दसूरिपादान् सगच्छान् गोपगिरिदुर्गात् श्रीभोजः परमजैनो विज्ञपयति, यथा–इह

1 P हस्तार्के । 2 P म्रियत । 3 P भ्रान्त्वा । 4 P °शोभी ।

तावत्प्रज्ञागङ्गाहिमाद्रयः 'सर्वसमाचारीनारीसौभाग्यवर्द्धनमकरध्वजाः क्षितिपतिसदःकुमुदिनी-
श्वेतदीधितयो भारतीधर्मपुत्राः श्रीबप्पभट्टिसूरयस्त्रिदिवलोकलोचनलेह्यललितपुण्यलावण्यता-
मादधिरे। तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थ। दृष्टविज्ञप्तिप्रमाणेनात्र' पादोऽवधार्यः। तद् दृष्ट्वा
भक्तिरहस्यं सूरयः ससंघाः सुतरां जहृषुः। संघानुमत्या गोविन्दाचार्यं मोढेरके मुक्त्वा श्रीनन्नसू-
5 रयो गोपगिरिं समसरन्'। भोजः पादचारेण ससैन्यः सम्मुखमायातः। गुरोः पादोदकं पपौ।
उल्लसत्तृष्णो गिरं शुश्राव। स्थानस्थानमिलितजनहृदयसंघट्टचूरितहारमौक्तिकधवलितराजपथं
पुरं निनाय। सिंहासने निवेशयामास तान्। मङ्गलं चकार। तदाऽऽज्ञामयो बभूव। तद्भक्ताना-
त्मवद्दर्श। तदभक्तान् विषवदीक्षांचक्रे। तदुपदेशाज्जिनमण्डितां मेदिनीं विदधौ। दुन्दुकस्य
तादृग् मरणं स्मृत्वा' कुपथेषु न रेमे। मथुरा-शत्रुञ्जयादिषु यात्राश्चकार। एकादश व्रतानुचचार।'
10 पूर्वराजर्षियशांसि उद्दधार। चिरं राज्यं भेजे। इत्येवं गोपगिरौ भोजो धर्मं लालयामास उदि-
याय च। अन्यैरपि पुण्यपुरुषैरेवं भाव्यम्।

॥ इति श्रीबप्पभट्टिचरित्रम् ॥ ९ ॥

॥ ग्रन्थाग्रं ६०० ॥

# परिशिष्ट : 3 .

## बप्पभट्टिसूरिचरिताचे पं. कृष्णमास्वामींनी केलेले संस्कृत शब्द रूपांतर



### श्रीरस्तु ॥

#### बप्पभट्टिचरितम् ।*

अस्ति गुर्जरेषु पाटलाभिधानं नगरम् । तत्र विजिताशेषबाह्याभ्यन्तरारातिर्निखिलशास्त्रतत्त्ववेदी सिद्धसेनो नाम मुनीन्द्र आसीत् । स कदाचिद्वीतरागं श्रीमहावीरं प्रणन्तुं मोढेरमगात् । तत्र तं तीर्थवर्यमभिवन्द्य तत्रैव निद्राणेन तेनापररात्रे कश्चन केसरिपोतो महासत्त्वश्चैत्यशृङ्गमारुह्य खेलन् स्वप्ने दृष्टः । सद्य एव स पुलकिताङ्गयष्टिरजागरीत् । स्वप्नं च तमनुस्मरन् 'नियतमयं कल्याणोदर्को भविष्यति' इति मनसि विनिश्चित्य नितरां मुमुदे । परेद्यवि प्रातर्मुदितमानसस्तत्रागतेभ्यो मुनिपुङ्गवेभ्यः स्वप्नमेनमावेद्य तस्य फलं चाकथयत्—'नूनमखिलविमतगजेन्द्रपाटनपटुः कश्चन शिष्योऽस्माकं भागधेयेनाद्य समेष्यति, मतं चार्हतं प्रचारयिष्यति' इति । एतदुपश्रुत्य मुदितमानसैस्तैः सह चैत्यमागत्य यावदयं महावीरं तीर्थकरं प्रणन्तुमारेभे तावत् षड्वर्षदेशीयः कश्चन स्पृहणीयाकृतिर्बालकः पुरः प्रादुरभूत् । बालकोऽसौ 'त्वं कस्कः ? कुतस्कुतः ?' इति पृष्टः प्रत्युवाच—'आर्याः, पाञ्चालोऽहं भट्टेस्तनूजो बप्पिगर्भे जातो नाम्ना शूरपालोऽस्मि । बालेनैव मया यदा बहवः शत्रवो विनिहतास्तदा पिता मां न्यवारयत् । तेन कुपितोऽहं पितरावनापृच्छ्यैवात्र प्रभुपादमूलमागतोऽस्मि' इति । श्रुत्वैतन्मुनिपुङ्गवास्तस्यामानुष्यकं तेजो वीक्ष्य विस्मिताः 'आयुष्मन्, किं त्वमस्माकमन्ते वस्तुमिच्छसि'? इत्यपृच्छन् । सोऽपि 'पूज्याः अद्यैव मद्भाग्यैः फलितम् , तथैव करोमि' इत्यभिधाय तद्वरिवस्यापरायणस्तत्रैव न्यवसत् । कदाचिदेकशः श्रुतमात्रेणानुष्टुभां सहस्रमवधारयतस्तस्य प्रेक्षाभियोगसंतुष्टेन मुनीन्द्रेण प्रेषिता मुनयो बालकेन सह डुम्बातिधीग्राममेत्य तत्पितरौ बालकस्य स्वेषां निकटेऽवस्थानमयाचन्त । पिता तु सुतमुखकमलदर्शनेनामन्दानन्दसागरनिमग्नोऽपि मुनिवचनाकर्णनेन कुमारस्य

---

* This prose version was made by Pandit V. Krishnamacharya of the Govt. Oriental Mss. Library, Madras, for purposes of comparison. It is published here as an appendix in the belief it may prove to be of use to the readers of the article who may need this assistance.

विरहमसहमानो नितरामखिद्यत । कृच्छ्राच्च निगृहीतखेदः प्रत्यवादीत्—
'आर्याः, नियतमर्वामि भवन्तो मम कुमारस्य निःश्रेयसाय प्रवृत्ताः ।
तथाप्ययमेक एवावयोराशाधरः पुत्रकः । तत्कथमेनं परिमोक्तुं पारयामि ?

निर्बन्धो यदि पूज्यानां तदा नावभिधां यदि ।
विश्रुतां बप्पभट्टीति कुरुध्वे तत्सुतोऽस्तु वः ॥' इति ।

ते च तथेत्यङ्गीकृत्य बालकमादाय मोढेरमागत्य सिद्धसेनानुमत्या तस्य दीक्षां कारयित्वा भद्रकीर्तिरिति दीक्षानाम चक्रुः । एतच्च विक्रमकालतो वर्षाणां सप्ताधिके शताष्टके गते निर्वृत्तम् । परंतु लोके बप्पभट्टिरिति पितृप्रतिपन्नं नामैव प्रथामुपगतम् । मोढेरस्थितैः सर्वैर्गुरुभिरभ्यर्थितः सिद्धसेनो बालकेनानेनान्यैश्च मुनिभिः सह तत्रैव वसन् कदाचिदस्मै बालकाय सारस्वतं मन्त्रमुपदिदेश । बालो निशीथे योगस्थस्तं मन्त्रमावर्तयन् तत्परितोषितया भारत्या समागत्यानुजगृहे ।

एकदा भद्रकीर्तिरेकाकी बहिर्विचरन् वृष्टिपीडितः किंचित् देवकुलमुपाश्रयत् । तदैवान्यः कश्चन बालोऽपि वृष्ट्याकुलितस्तदेव देवकुलमाजगाम । तत्र च तयोः कुमारयोः सरसमालपतोः सरसानि काव्यानि वदतोः सख्यं समजनि । शान्ते वर्षे द्वावपि तौ बालौ गुरुसमीपमाजग्मतुः । ततो गुरवो भद्रकीर्तिना सह समागतं द्वितीयं बालमुद्वीक्ष्य तमाशीर्भिरभिनन्द्य तस्योदन्तमपृच्छन् । बालः प्रत्यवादीत्—'आर्याः,

वयंमौर्यमहागोत्रसंभूतस्य महाद्युतेः ।
श्रीचन्द्रगुप्तभूपालवंशमुक्तामणिश्रियः ॥
कान्यकुब्जयशोवर्मनृपतेः सुयशोऽङ्गभूः
पित्रा शिक्षावशात् किंचिदुक्तः कोपादिहागमम् ॥'

इति संक्षेपतः स्वीयमुदन्तमावेद्य 'आम' इति स्वनाम खटिकया भूमावालिखत् । स्वनामाग्रहणेन 'धर्मरहस्यवेद्ययं कुमारः' इति विस्मिता गुरवः पूर्ववृत्तं कंचन विषयं स्मृतिपथमानिन्युः—पूर्वं श्रीरामसैन्ये षण्मासवयस्को बालः कश्चन पीलुवृक्षतले वस्त्रान्दोलिकाशायी दृष्टः । तज्जननी फलान्याचिन्वती दृष्ट्वापृच्छाम—'वत्से, कासि त्वम् ? कथमीदृशीमवस्थामापन्ना ?' इति । सा प्रत्यवादीत्-'आर्याः, अहं कान्यकुब्जभूपालस्य यशो-

वर्मणः कुटुम्बिनी । आपन्नसत्त्वां मामालोक्य मात्सर्योपहता मत्सपत्नी कमपि हेतुमारोप्य नृपेण मां नगरान्निरवासयत् । ततो वने दारकमिमं प्रसूता वन्यैर्जीवन्ती स्वानि भाग्यानि केवलं निन्दन्ती महत् कृच्छ्रमनुभवामि ' इत्युक्त्वा प्रारुदत् । अस्माभिश्च ' बाले, मा विषाद । पितृगेह इवास्मन्निकटे बालकेन सह सुखं स्थीयताम् ' इत्यभिहिता अस्मन्निकट एवावसत् । कतिपयेन कालेन तत्सपत्नी दिष्टगतिमुपगता । नृपतिश्च तां बालामगलितचारित्रामवगम्य पुनराकारयत् । नूनमसौ स एव बालः—इति । अथ बालमेनं स्निग्धेन चक्षुषोद्वीक्ष्य स्वनिकट एवावस्थाप्य भद्रकीर्तेः सच्छात्रं विधाय निखिला द्वासप्ततिं कला अध्यापयन् । एकदासौ राजकुमारः सब्रह्मचारितास्नेहात् सुहृदं बप्पभट्टिमवदत्—' सखे, यदाहं राज्यं प्राप्नुयां तदा तद्राज्य तुभ्यं प्रदास्यामि ' इति । कतिपयेन कालेन तं राजकुमारं तत्पिता समाहूय राज्ये ऽभिषिषेच । गच्छता च कालेन यशोवर्मा दिवं गतः । तस्य यथावदौर्ध्वदेहिकानि कर्माण्यामो निरवर्तयत् । अथ राजकुमारः प्रधानपुरुषैः सुहृदं बप्पभट्टिं समानाय्य राज्यं तस्मै न्यवेदयत् । बप्पभट्टिस्तु ' सर्वसङ्गमुचामस्माकं किं राज्येन ? ' इति तन्निराचकार । आमभूपोऽपि प्रतिज्ञाहान्या विमनायितः पुनः सुहृदमभ्यर्थयत्—

' सुहृदां वः पुरा पूर्वं यन्मया प्रतिशुश्रुवे ।
राज्यमाप्तं प्रदास्यामि तन्नक्षम वरवारणः ।
काममेवामुमादत्त चेयूयं तन्मम प्रभो ॥ '

इति । तदपि निराकुर्वाणं सुहृदं धरणीधरो बलात् पट्टकुञ्जरे समारोप्य जितक्रोधाद्यभिज्ञानतया छत्रचतुष्टयं धारयित्वा चामरैः संवीज्य महतोत्सवेन पुरं प्रावेशयत् । अथ धौतान्तरमनर्घं सिंहासनमानीय तस्मिन्नुपवेष्टुं तं प्रार्थयत । तेनापि ' जाते सूरिपदेऽस्माकं कल्प्यं सिंहासनासनम् ' इति प्रतिपन्ने राजा खिन्न एवान्यस्मिन्नासने तमुपावेशयत् ।

एवं महतोपचारेण सखायं कतिपयं कालं तत्रावस्थाप्य गुरुसंनिधिगमनमभिलषन्तं तं महता सैन्येन छत्रचामरादिपरिच्छदैश्च सह गुरुसंनिधिं प्रस्थापयामास । प्रधानपुरुषास्तेन सह मोढेरं प्राप्य सिद्धसेनं मुनीश्वरं प्रणम्य व्यजिज्ञपन्—' आर्य, अचन्द्रं नभो दृष्ट्वा चकोर इवानेन विनाकृतां सभां दृष्ट्वास्माकं राजा नितरां खिद्यते । तदेनमाचार्यके प्रतिष्ठाप्यास्माभिः सह राजसमीपं प्रेषयितुमनुगृहाण । अस्योपदेशेनास्माकं राजा भवाब्धिं तरतु '

इति। प्रथममेतदनभ्युपगच्छता पुनः पुनरनुनाथितेन मुनिना कथंकथमप्यनुज्ञातः पुण्येऽहनि शुभे मुहूर्तेऽर्हत्तत्त्वमुपदिष्टो बहुप्रकारमनुशिष्टश्च कान्यकुब्जं प्रतस्थे। आमभूपतिः सुहृदमागतमवगत्य महता परिवारेण तं प्रत्युद्गम्य महान्तं द्विपमारोप्य पुरं प्रावेशयत्। अतिमनोहरमभ्रंलिहं प्रासादमानाय्य महति सिंहासने गाढिकयास्तृते बलादनिच्छन्तमपि तं सुहृदं समुपावेशयत्। बप्पभट्टिर्भूपालेन सह सरसानालापान् कुर्वन् अन्तरान्तरा विविधान् धर्मानवबोधयंश्च राज्ञो नितरां प्रीतिपात्रं मान्यश्च बभूव। अथैकदा बप्पभट्टिर्भूपालमवोचत्—'महाराज, धर्म एव सम्यगनुष्ठितो नृणां परं पदं प्रयच्छति। तेषु च धर्मेषु जिनमन्दिरनिर्माणं मुख्यतया गण्यते। तद्भूपालैः संपन्नविभवैरवश्यं जिनमन्दिरं निर्मातव्यम्' इति। एतदाकर्ण्यामभूपाल आत्मानं कृतकृत्यं मन्यमानस्तस्मिन्नगरे सैकशतहस्तोच्छ्रितं प्रासादं निर्माय तत्राष्टादशभारोन्मानां श्रीवर्धमानगुरोः सुवर्णप्रतिमां स्थापयित्वा स्वसुहृदा तस्याः प्रतिष्ठां कारयामास। तथा गोपगिरौ त्रयोविंशतिहस्तोन्नतं प्रासादं निर्माप्य तत्र सपादलक्षसुवर्णटङ्कव्ययेन मण्डपं कारयित्वा तत्र श्रीवीरगुरोः प्रतिमां स्थापयामास। एवं राज्ञोऽस्मिन् पण्डितवरे निरतिशयं बहुमानं दृष्ट्वा मत्सरग्रस्ताः पौरा राजानमुपजापेन किंचिदिव तस्मिन् विमनायितमकुर्वन्। अथैकदा राजा सुहृदे यथापुरं सिंहासनमदत्वान्यमहीपालोपनिवेशार्हमासनमदात्। तेन च दुर्मनायितो बप्पभट्टी राजानमेवमबोधयत्—

'मर्दय मानमतङ्गजदर्पं विनयशरीरविनाशनसर्पम्।
क्षीणो दर्पाद्दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि॥'

इति। राजाप्येतदाकर्ण्य प्रकृतिमापन्नो विगर्हयन्नात्मानं सुहृदमनुनीतवान्। यथापुरं च सुहृद्यवर्तत।

अथैकदा राजा किंचिदिव प्रणयकुपितां पदे पदे मुखभङ्गं कुर्वतीं देवीमुद्वीक्ष्याभाषत—

'बाले चङ्क्रमन्ती पदे कुतः करोषि मुखभङ्गम्।'

इति। अस्य बप्पभट्टिः पूरणमकरोत्—

'नूनं रमणापराधे मेखलयापि पदि नह्यन्ति।'

इति। एतदाकर्ण्य राजा किंचिदिव विकृतोऽभवत्। राजानमेवं विकृतं दृष्ट्वा सूरिरयं श्लोकमिमं बहिर्द्वारकवाटयोर्विलिख्य नगरान्निष्क्रान्तः—

'याम: स्वस्ति तवास्तु रोहणगिरेर्मत्त: स्थिति: प्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्तिः नः॥'

इति। कान्यकुब्जान्निनिष्क्रान्तः क्रमेण गौडेषु लक्षणावतीं नाम पुरीं प्राप्य तत्रत्येन वाक्पतिराजेन पण्डितवरेण संगतस्तेन तत्पुराधिपाय धर्मभूपालाय निवेदितः—

'वशे वाग्देवता यस्य कविर्मे पूर्वसंस्तुतः।
स इहागात्प्रभोः पुण्यैर्बप्पभट्टिर्मुनीश्वरः॥'

इति। एतदाकर्ण्य राजा तदागमनेन मुदितमना मनस्यचिन्तयत्—'नूनमद्य सुदिवसोऽस्माकं यदनेन सूरिवर्येणाहं द्रष्टव्यः। परं तु आमभूपालो मे शत्रुः कदाचिदेनमिहस्थमवगत्य पुनराकारयेत्। नूनमसौ पूर्वसौहृदात् तत्प्रार्थनामङ्गीकृत्येतो व्रजेत्। ततो मे महती तिरस्कृतिर्जायेत। अतः सूरीन्द्रेणेयं प्रतिज्ञा तावत्कारयितव्या—यदामभूपालः स्वयमेव सभामागत्याकारयति तदैवेतः प्रस्थातव्यम्, नान्यथा' इति। एवं निश्चित्य सूरीन्द्रमेतदावेदयत्। स च तथेत्यङ्गीचकार। तच्छ्रुत्वा धर्मभूपो मुदितमुदितो महतोत्सवेन तं सूरिवर्यं पुरं प्रवेश्य सभामानाय्य बहुमानयत्। बप्पभट्टिश्च विविधैः काव्यालापैः राजानमतोषयत्।

तत्रापि काव्यवक्तृत्वलीलानन्दितपर्षदः।
अवतस्थे सुखं सूरिर्दोगुंदग? इवामरः॥

आमभूपालोऽपि प्रातः सभामनागतं बप्पभट्टिमुपश्रुत्य भृशमुद्विग्नस्तदन्वेषणाय परितः पुरुषान् प्राहिणोत्। अन्येद्युर्बहिरारामे पुरा संचरमाणः परस्परमभिघ्नतोः सर्पनकुलयोः सर्पेण विनिहतं नकुलं दृष्ट्वा विस्मितः समुपसृत्य यावदुरगं ददर्श तावत्तस्य शिरसि भ्राजमानं मणिं कंचनापश्यत्। 'नूनमस्य मणेः प्रभावोऽयं यदनेन नकुलो हतः' इति विस्मितस्तं भुजङ्गं दृढं तुण्डे गृहीत्वा स्वगृहमानीय तं सर्पं यत्रापि सुरक्षितं कृत्वा सभामागम्य समस्यामिमामपठत्—

'शस्त्रं शास्त्रं कृषिर्विद्या यद्यान्ययेन जीवति।'

इति। पारिषद्याश्च विद्वांसः समस्यामेनां स्वस्वाभिप्रायानुगुणं बहुधा समपूरयन्। परं तु न किमपि राज्ञो हृदयग्राहि बभूव। ततो राजा सूरिवर्यं बप्पभट्टिमेव प्रशंसन् 'यः किल समस्यामेनां मदभिप्रायानुगुणं पूरयति तस्मै हेम्नां टङ्कलक्षं ददामि' इत्युदघोषयत्। एतदाकर्ण्य कश्चन दुरोदराजीवः 'धनार्जनोपायोऽयम्' इति निश्चित्य तत् श्लोकार्धं गृहीत्वा गौडानुपगम्य बप्पभट्टिनिकटे समस्यामेनामपठत्। बप्पभट्टिश्चानुपदमेव—

'सुगृहीतं हि कर्तव्यं कृष्णसर्पमुखं यथा।'

इति तामपूरयत्। आममहीपालं नागावलोक इत्यन्वर्थया आख्यया च समाजुहाव। ततः प्रभृति नाम्नाप्यनेनामभूपालो विख्यातिमाप। एतदादाय स द्यूतजीवी राजसमीपमागत्य समस्यां पूरितामपठत्, तस्य च नागावलोक इत्यन्यामाख्यामभिदधे। आमभूपालस्तु श्रुत्वैतत् मुदितमानसो 'नूनमियं मम सुहृदा बप्पभट्टिनैव पूरिता भवेत्' इत्यवधार्य तमपृच्छत—'भद्र, कथय तत्त्वम्, केनेयं समस्यापूरि?' इति। सोऽपि 'देव, सुगृहीतनाम्ना बप्पभट्टिना' इत्यवदत्। राजा तन्मुखेन स्वसुहृदं गौडेषु धर्मभूपालसदसि वर्तमानमवगत्यातीव हृष्टस्तस्मै दुरोदराजीविने यथार्हं धनं दत्वा तं विसृज्य सुहृदानयनाय प्रधानपुरुषान् प्राहिणोत्। ते भट्टिमुपगम्य राज्ञः संदेशं व्यजिज्ञपन्। भट्टिस्तु 'यद्यस्माकमागमनं भवतामधिपस्याभीप्सितं तर्हि तेन स्वयमेवागत्य धर्ममहीपाल आपृच्छ्यताम्' इत्यभिधाय तान् व्यसर्जयत्। आमभूपालोऽपि तन्मुखेभ्यो विदितवृत्तान्तः स्वयमेकाकी प्रस्थाय रहसि भट्टिगेहमागत्य रात्रौ सुहृदा संमन्त्र्य सर्वं करणीयजातं निश्चिकाय। प्रातर्भट्टिर्यथावद्राजास्थानमगच्छत्। आमभूपालोऽपि स्थगीधरवेषमादाय करे पत्रिकां गृहीत्वा राज्ञः सभामाजगाम। सूरीन्द्रः पत्रिकामादाय राज्ञेऽदर्शयत्। राजा तु तं दूतमपृच्छत् - 'कीदृशोऽस्य ते राजा?' इति। दूतः प्रत्यवदत्—'महाभाग, किं ब्रवीमि। ताम्बूलकरङ्कवाहतुल्यो भवति' इति। अथ मातुलिङ्गं करे बिभ्राणं तं भट्टिरपृच्छत्—'किं ते करे?' इति। स प्रत्यवदत्—'बीजऊर' इति। ततो राज्ञा समनुज्ञातो दूतवेषो राजा ततः प्रस्थाय रात्रौ वेश्यागृहे सुखमवसत्। वेश्यया तया स्वनामाङ्कितं कङ्कणमेकं दत्त्वा अन्यत् राजगृहद्वारे प्रक्षिप्य कस्मिंश्चिन्नगरोद्याने गूढमवतस्थे। परेद्यवि भट्टिर्धर्ममहीपालस्य समीपमागत्य स्वस्य कान्यकुब्जप्रस्थानमनुमन्यमानं ययाचे। राजा तु—'महाभाग, पूर्वमेव भवता प्रतिज्ञा कृता—यद्यामभूपालः स्वयमेव सभामागत्य प्रार्थयते तदैव गन्तव्यं नान्यथेति। अद्य तु स न साक्षादागतः, परं दूतमेव प्रजिघाय।

तत् कुतस्त्वया प्रस्थातव्यम् ? इति । बप्पभट्टिः प्रत्यवदत्—'महाराज, नूनं स एवामभूपालस्ताम्बूलकरङ्कवाहवेषमादायात्रागतः । भवता कीदृशोऽद्य राजेति पृष्टः ताम्बूलकरङ्कवाहतुल्य इति प्रत्युवाच । मया च किं ते करे इति पृष्टः बीजपूर इति प्रत्यवदत्' इति । अत्रान्तरे कश्चन भृत्यो राजसमीपमागत्य 'देव, कङ्कणमेतत् प्रासादद्वारि प्रक्षिप्तं दृष्टम्; अन्यच्च वेश्यागृहे समधिगतम्' इत्यभिधाय कङ्कणद्वयं राज्ञः पुरस्तान्निदधे । राजा तु तदादाय तत्रोल्लिखितानि आमभूपाल इत्यक्षराणि दृष्ट्वा सभामागतं शत्रुमनधिगतवन्तमात्मानं मूढं मत्वा बहु विजगर्हे । कृच्छ्राच्च भट्टेर्गमनमनुमेने । भट्टिस्तं समाश्वास्यामभूपालेन सह नगरोद्याने संगतः कान्यकुब्जं प्राप ।

अत्रान्तरे सिद्धसेनो जरया प्रपीडितो बप्पभट्टिं दिदृक्षुर्मुनीन् प्रेषयामास । मुनिभिरावेदितवृत्तान्तो भट्टिरामभूपालेनानुज्ञातः सद्य एव प्रस्थाय मोढेरे सिद्धसेनं प्रणनाम । अथ भट्टौ स्वस्य संन्यासस्वीकारमभियाचमाने, सिद्धसेनस्तं प्रतिषिध्य दिवं जगाम । अस्य पारलौकिकं कर्म यथावत् विनिर्वर्त्य भट्टिः पुनरामभूपालसमीपमाययौ ।

अथैकदा धर्मभूपाल आमभूपाय संदेशमिमं प्राजिघाय—'अस्ति मत्कटके कश्चन सौगतो भिक्षुर्वर्धनकुञ्जरो नाम । सोऽतीव पण्डितो वादनिपुणश्च । तस्य भवत्पण्डितेन सह वादः करणीयः । आवयोर्देशसन्धिरेव वाददेशः परिकल्पनीयः । तस्मिन् वादे यस्य राज्ञः पण्डितो जयति तस्मै अन्येन राज्ञा स्वस्य राज्यादिकं सर्वं समर्प्य तदधीनेन भाव्यम्' इति । आमभूपोऽपि भट्टिना सह संमन्त्र्य 'तथैवास्तु' इति प्रतिसंदिदेश । एतदवगत्य धर्मभूपालो वर्धनकुञ्जरं वाहनमारोप्यानेकैः पण्डितप्रवरैः सहाजगाम ।

> परमारमहावंशसंभूतः क्षत्रियाग्रणीः ।
> तस्य वाक्पतिराजोऽस्ति विद्वान्निरुपमप्रभः ।
> पूर्वं परिचितश्चासौ बप्पभट्टिप्रभोस्ततः ।
> तस्य वाङ्मर्मविज्ञानहेतोः संवाहितो मुदा ॥

कान्यकुब्जादामभूपोऽपि बप्पभट्टिं विद्वद्वृन्दैः सार्धमानीय तामेव भुवमाजगाम । एवं समुदितेषु सर्वेषु व्यवस्थिते दिने बप्पभट्टिवर्धनकुञ्जरयोर्वादः समारभत ।

> ततः श्रीसौगताचार्यः पूर्वं वर्धनकुञ्जरः ।
> आशीर्वादमुदाजह्रे व्यर्थकं द्वीपपर्षदाम् ॥

## बप्पभट्टिचरितम्

‘शर्मणे सौगतो धर्मः प्राच्यवाचंयमेन यः।
आदृतः साधयन्विश्वं क्षणक्षणविनश्वरम्॥’

इति।

अथ श्वेताम्बराचार्यो बप्पभट्टिः सुधीपतिः।
अभ्यधत्ताशिषं स्वीयां भूपालाय यथा तथा॥
‘अर्हन् शर्मोन्नतिं देयान्नित्यानन्दपदस्थितः।
यद्वाचा विजिता मिथ्यावादा एकान्तमानिनः॥’

इत्याशिषं प्रयुज्य स्वं स्वं मतमवलम्ब्य विवदमानयोरनिर्णयजयपराजययोस्तयोः षण्मासा व्यतीयुः। अन्येद्युः श्रीमानामभूपालः सूरिमवदत्— ‘प्रभो, राजकार्याणामतिपातो जायते। कदा वादः संपूरयिष्यते?’ इति। अथाचार्यः ‘महाराज, वाग्विनोदसुखायायमेतावन्तं कालमुपेक्षितः। पश्य, श्वः प्रभाते भिक्षुकमेनं निग्रहीष्यमि’ इत्युक्त्वा गुरूपदिष्टं सारस्वतं मन्त्रमावर्तयन् वाग्देवीं तुष्टाव। तेन प्रसेदुषी भारती ‘वत्स, प्रसन्नास्मि। वरं वृणु’ इत्यवदत्। आचार्यश्च ‘देवि, श्वः प्रभाते वादिनममुं जेतुमिच्छामि। प्रसीदानुगृहाणैतत्’ इत्यवादीत्। सरस्वती प्राह—‘पूर्वं सप्त वारानहममुना समाराधिता तदभ्यर्थनया कांचनाक्षय्यवचनां गुटिकां तस्मै प्रादाम्। तामास्ये निधाय यद्ययं विवदितुमारभेत, तदा धिषणेनापि नासौ पराजेतुं शक्यः इति। ततः ‘देवि, न सांप्रतं भवत्या जैनसमयप्रत्यनीकमेनमनुग्रहीतुम्’ इत्याचार्येणाभ्यर्थिता वाणी ‘वत्स, नाहं जैनसमयविरोधिनी। तद्वदामि कंचिदुपायम्। श्रूयताम्—वादारम्भसमये करके तीर्थमानाय्य सर्वेऽपि गण्डूषान् कृत्वा वादमारभध्वम्। सोऽपि तथैव नियतं गण्डूषमाचरिष्यति। गण्डूषसमये सा गुटिका गलिता भवेत्। ततो भवतः सुजयो भविष्यति’ इत्यभिधायान्तरधात्। सूरिः कृतकृत्यमात्मानं मन्यमानो गूढं वाक्पतिराजमेत्य वृत्तान्तमेनं न्यवेदयत्। वाक्पतिराजेनापि ‘सखे सूरिवर्य, सम्यगाचरितं भवता। तथैवाहं करके तीर्थमादाय सभ्यान् सर्वान् गण्डूषान् कारयिष्यामि। नियतमसावपि गण्डूषमाचरिष्यति, त्वत्समीहितं च सेत्स्यति’ इत्यभिहितः सूरिवर्यो यथागतं स्वावासमगात्। परेद्युर्निखिलेषु पार्षदेषु मिलितेषु वाक्पतिराजेन समानीतं तीर्थं गृहीत्वा सर्वेऽप्यास्यशुद्धये गण्डूषान् व्यदधुः। वर्धनकुञ्जरोऽपि गण्डूषानकरोत्। गुटिका च प्रमादाज्जलेन सह गलिता। ततो यथावत् वादे समारब्धे बप्पभट्टिना वर्धनकुञ्जरो द्वित्रैरेव वाक्यैर्विजिग्ये। सर्वतो भेरिजयोऽजोघुष्यत। ‘वादिकुञ्जरकेसरी’ इति बिरुदं च दत्तम्। ततो यथासमयमामभूपालो धर्मभूपालस्य राज्यं ग्रहीतुमारभत। तदा

बप्पभट्टिरवदत्—'महाराज, वादे विजयस्य मुद्रालेखनमेव शास्त्रसंमतं प्रमाणम्; न पराजितस्य निग्रहः। तत् धर्मभूपालस्य राज्यं तस्मिन्नेव तिष्ठतु ' इति। एतदाकर्ण्य आमभूपालोऽनिच्छन्नपि गुरुवाक्यबहुमानात् तथेत्यङ्गीचकार। अथ भट्टिः सौगतं भिक्षुं पराजितं गोपगिरिमानाय्य श्रीमहावीरबिम्बं दर्शयित्वा तस्य चेतसि जैनं धर्मं सुप्रतिष्ठितमकरोत्। ततो वर्धनकुञ्जरो द्वादशभिर्व्रतैः सम्यक्त्वं ग्राहितो बप्पभट्टिमापृच्छय स्वं स्थानं प्रययौ। राजानावपि पूर्ववैरं परित्यज्य सोदर्याविव परस्परमापृच्छय स्वं स्वं पुरं जग्मतुः। अन्यदा वर्धनकुञ्जरो धर्मभूपालमवोचत्—'न मे तत्रापि व्यथा यद्बप्पभट्टिर्मां विजिग्ये। परमेतद्विमृशन् नितरां दूये यत् त्वदन्नपरिपोषितो वाक्पतिराजो मुखशुद्धिकरणव्याजेन गुटिकां भ्रंशयन्नस्मास्वपाकरोत्' इति। राजा तु तस्य छलवादं श्रुत्वापि वाक्पतिराजेन स्नेहं न शिथिलयांचकार।

यशोवर्मनृपो धर्ममन्यदा चाभ्यषेणयत्।
तस्माद् द्विगुणितबलस्तं भूपं युद्धेऽवधीद्बली॥
तदा वाक्पतिराजश्च बन्धे तेन निवेशितः।
काव्यं गौडवधं कृत्वा तस्माच्च स्वममोचयत्॥
*कान्यकुब्जे समागत्य संगतो बप्पभट्टिना।*
स राजसंसदं नीतस्तुष्टुवे चेति भूपतिम्॥
'पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवान्
महति समरे शत्रुघ्नस्त्वं सदैव युधिष्ठिरः।
इति सुचरितैः ख्यातिं बिभ्रच्चिरंतनभूभृतां
कथमसि न मां धाता देवस्त्रिलोकविजय्यपि॥'
संमानातिशयो राज्ञा विदधे तस्य भूभृतः।
गङ्गां गेहागतां को हि पूजयेदलसोऽपि न॥
त्यागाद्धर्मस्य मा कार्षीर्मनस्यनुशयं सखे।
तवाधीनमिदं राज्यं विचिन्त्य सुखमास्स्व तत्॥
इत्यामराजव्याहारामृतसारपरिप्लुतः।
उपाश्रयमनुप्राप्यातिष्ठत्परमया मुदा॥

राजा च वृत्त्यर्थं सुवर्णटङ्कानां लक्षद्वयं तस्मै प्रादात्। एवं वाक्पतिराजो बप्पभट्टिना सहामभूपालस्य सदसि वसन् गौडबन्धो मदमहीविजयश्चेति काव्यद्वयमरचयत्। अथ बप्पभट्टिः स्वस्य सतीर्थ्यौ नन्नसूरिगोविन्दसूरी आनाय्य राज्ञा सह सख्यं कारयित्वा संमानितावकरोत्।

एवमतिक्रामत्सु कतिपयेषु वत्सरेषु राजा गायन्त्या कयाचन मातङ्ग्या संसर्गमभजत। तेन निर्विण्णो वाक्पतिराजस्तं हित्वा मथुरामभजत।

398

बप्पभट्टिस्तु राजानमपथप्रवृत्तं दृष्ट्वा मनस्येवमचिन्तयत्—'नूनं सादिन एवैष दोषो यदश्वो विपथं व्रजति। तद्राजानं विपथगामिनं दृष्ट्वाप्युपेक्षमाणं मामेव लोकोऽयं विगर्हेत। तत् यथाकथंचिदयं निवर्तनीयोऽस्मादुन्मार्गात्' इति। इत्थमवधार्य पद्यमिदं राजगृहे नव्येषु पट्टेषु खटिकया विलिख्य स्वगृहमाययौ—

'शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्ति शुचयः संगेन यस्यापरे।
किं वातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः! कस्त्वां निषेद्धुं क्षमः॥'

इति। परेद्यवि राजा यावदेतत् पद्यमपठत् तावत् तस्य मोहो दुग्धादिव धुत्तूरजो दोषोऽनश्यत्। लब्धप्रकृतिः सुहृदमेव प्रशंसंस्तस्य मुखं प्रेक्षितुं लज्जमानो दुष्कृतस्यास्य देहत्यागमेवोचितं प्रायश्चित्तं विनिश्चित्य चितानले देहं त्यक्तुमुदयुङ्क्त। एवं साहसे प्रवृत्तं राजानं ज्ञात्वा गुरुप्रवरः 'महाराज, किमिदमनुचितं कर्मारभ्यते। सत्यं विद्वांसोऽपि क्वचित् प्रमाद्यन्ति। तत्रानुशय एव पर्याप्तं प्रायश्चित्तं विहितम्। तन्मुधा लोकंभरमात्मानं मा विनाशय' इति बहुधा राजानमबोधयत्। ततो राजा तं व्यवसायं त्यक्त्वा गुरूपदेशेन पुनर्जातमिवात्मानं मन्यमानः पुरं प्रविवेश। बप्पभट्टिश्च प्रत्यहं राजानं विविधान् धर्मानन्तरान्तरा जैनं तत्त्वं चाबोधयत्। एकदा राजानं जैनमतावलम्बनमभ्यर्थयामास। राजा तु 'विद्वद्वर, नूनमार्हतो धर्मो मे हृदयंगमो वर्तते। परं तु कुलक्रमागतं शैवधर्ममुज्झितुं नोत्सहे। यदि न कुप्यति भवांस्तर्हि किमपि वच्मि—अस्ति वाक्पतिराजो मथुरां गतः। स तत्र वराहस्वामिप्रासादे यज्ञोपवीतवीतास्त्रस्तुलसीमालालंकृतकण्ठो नासाग्रन्यस्तदृष्टिरनेकैर्वैष्णवब्राह्मणैः सहितो भगवन्तं पुराणपुरुषं पुण्डरीकाक्षं ध्यायन्नास्ते। तं चेदुपगत्य जैनमतमवबोध्यार्हतं मतं ग्राहयसि मयापि गृहीतमेव तं धर्ममवगच्छ' इत्यभ्यधात्। बप्पभट्टिरपि तथेत्यभ्युपगम्यानेकैः सामन्तनृपैः पण्डितैश्च साकं मथुरायां वराहस्वामिमन्दिरं प्राप्य तत्र पूर्वोक्तावस्थं परमात्मन्यधोक्षजे न्यस्तचेतसं वाक्पतिराजमपश्यत्। उदाहरच्च तस्य चेतः परीक्षितुमिमान्यन्यानि च कानिचित् पद्यानि—

'दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः।
आत्मन्येवानुरक्तो वः श्रियं दिशतु केशवः॥
कुलं पवित्रं जननी कृतार्था वसुंधरा पुण्यवती त्वयैव।
अबाह्यसंवित्सुखसिन्धुमग्नं लग्नं परे ब्रह्मणि यस्य चित्तम्।
संध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च परां विलज्ज! शिरसा तच्चापि सोढं मया।

श्रीर्जातामृतमन्थने यदि हरः कस्माद्विषं भक्षितं
मां स्त्रीलम्पट मा स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥'

इति । एवं शृङ्गाररसस्वप्रशंसापराणि पद्यान्याकर्ण्य 'केन वा दुष्टेनेमानि पद्यानि पठता मम समाधिः प्रतिहन्यते ?' इति कोपेन यावदुन्मील्य लोचने पुरः पश्यति तावत् स्वस्य पुराणसुहृदं बप्पभट्टिमपश्यत् । सुहृदालोकनसंजातहर्षश्च भाट्टना सह विविधाः कथाः कुर्वाणस्तेन कथाप्रसङ्गेनार्हतं तत्त्वमवबोध्य तन्मतं प्रवेश्य श्वेताम्बरो भिक्षुः कारितः । ततः सामाजिकैः स्तुतो बप्पभट्टिः कान्यकुब्जं प्रतस्थे । पूर्वमेव ज्ञातवृत्तान्तेनामभूपालेन प्रत्युद्गम्य नगरं प्रवेशितेन तेन जैनगुरुणा बप्पभट्टिना राजा जैनं मतमवालम्भ्यत । तत्प्रेरितश्च राजा पट्टचतुष्टये श्रीवर्धमानस्य बिम्बं विलिख्य कान्यकुब्ज एकं मथुरायामेकमणहिल्लपुर एकं सतोर चैकं न्यधात् । भट्टिस्तत्सदसि वर्तमानस्तारागणादीन् द्वापञ्चाशतं प्रबन्धानरचयत् ।

अन्यदा राजा समुद्रसेनमभिषेणयन् तदधिष्ठितं राजगिरिनामकं दुर्गं रुरोध । एवं यतमानोऽपि स यदा तद्भेत्तुं नाशकत् तदा भट्टिमपृच्छत्—'सखे, बहु प्रयतमानेनापि मया दुर्गमिदं न भेत्तुं शक्यते । कथय, कदा वा कथं वा दुर्गमिदं गृह्येत' इति । भट्टिस्तु प्रश्नचूडामणिं विमृश्य प्रत्यब्रवीत्—'महाराज, तव पौत्रो भोजनामा जनिष्यते । तेनेदं ग्रहीष्यते' इति । राजा तु दुर्गमिदं वशेऽकृत्वा न पुरं प्रवेक्ष्यामीत्युक्त्वा तत्रैवावसत् । द्वादशसु वत्सरेषु गतेषु दुन्दुकस्य सूनोर्भोजो नाम सुतो जज्ञे । जातमात्रमेव तं प्रधानपुरुषाः पर्यङ्किकाशायिनं तत्रानयन् । यदा स शिशुस्तद् दुर्गं ददर्श तदैव तत् शकलशो बिभिदे । ततश्चामभूपालो दुर्गं प्रविश्य स्ववशमकरोत् । समुद्रसेनस्तु कथंचिन्नगराद्विनिर्गत्य पलायितः। ततश्चामभूपालो बप्पभट्टिना सह तीर्थयात्रां प्रस्थितः पुण्डरीकाद्रिवासं युगादिनाथं रैवतकाद्रिस्थं श्रीनेमिं पिण्डतारके दामोदरं द्वारकायां श्रीकृष्णं सोमेश्वरपुरे सोमनाथं च संपूज्य पुनः स्वं पुरमाययौ । ततो दुन्दुकं सुतं राज्येऽभिषिच्य गङ्गां प्राप्य नावमारुह्य मागधं गन्तुं गङ्गां तरन् मध्येगङ्गं धूमनिर्गममभिवीक्ष्य निर्वाणसमयं प्रतिबोधितो राजा सर्वज्ञं जिनदेवं मनसा चिन्तयन् प्राणान् जहौ ।

विक्रमतो वर्षाणां शताष्टके सनवतौ च भाद्रपदे ।
शुक्ले सितपञ्चम्यां चन्द्रे चित्राह्वयऋक्षस्थे ॥
तुलाराशौ तथा चन्द्रस्थितेऽर्के प्रहरेऽन्तिमे ।
श्रीमान्नागावलोकाह्वयो राजा प्राप दिवं तदा ॥

एवं स्वर्गतस्यामभूपालस्य भट्टिः सकला और्ध्वदेहिकीः क्रियास्तत्सनाभिभिर्निरवर्तयत् । अथ वप्पभट्टिः कान्यकुब्जमेत्य दुन्दुकस्य राज्ञः समीपेऽवसत् । राजा तु कन्याख्यायां वेश्यायां सक्तो भोजं कुमारमद्रुह्यत् । विदितवृत्तान्तैर्मातुलैरागत्य भोजः पाटलीपुरं निन्ये । एकदा दुन्दुको वप्पभट्टिमवदत्— "पण्डितवर, त्वं पाटलीपुरं गत्वा 'राजा सुतेऽतीव वत्सलो जातः सुतस्य मुखकमलं दिदृक्षते' इति बान्धवान् प्रलोभ्य भोजमानय" इति । भट्टिस्तु तथा कर्तुमनिच्छन् कथं कथमपि पञ्च वर्षाण्यत्यवाहयत् । अथैकदा दुन्दुको वप्पभट्टिं सुतानयनाय बलात् प्रस्थापयामास । भट्टिरपि पाटलीपुरसमीपमेत्य मनस्यचिन्तयत्—'यद्यहं भोजं दुन्दुकसमीपं नयेयं तदा नियतमसौ वेश्यासक्तचित्तः सुतं हन्यात् । यदि भोजमनादाय रिक्तहस्तः प्रतिनिवृत्योपगच्छेयं तदा मूर्खो मां हन्यादेव । अतोऽत्रैव प्रायोपवेशनेन प्राणत्याग एव वरम्' इति । एवं निश्चित्य पाटलीपुरोपकण्ठ एव दिनान्येकविंशतिं क्षुधातृष्णादीन् विजित्य निराहारो भूत्वा द्वाविंशेऽहनि प्राणानहासीत् ।

> विक्रमतः शून्यद्वयवसुवर्षे ( 800 ) भाद्रपदतृतीयायाम् ।
> रविवारे हस्तर्क्षे जन्माभूद्बप्पभट्टिगुरोः ॥
> षड्वर्षस्य व्रतं चैकादशे वर्षे च सूरिता ।
> पञ्चाधिकनवत्या च प्रभोरायुः प्रकीर्तितम् ॥
> शरनन्दसिद्धिवर्षे (895) नभःशुक्लाष्टमीदिने ।
> स्वातिभेऽजनि पञ्चत्वमामराजगुरोरिह ॥

इत्थं वप्पभट्टेर्मृतिमाकर्ण्य भोजो भृशं रुदन् सद्य एव चितानलं प्रवेष्टुमिच्छन् मात्रादिभिः प्रतिषिद्धः स्वस्योत्तरीयं गुरोश्चितायां प्रक्षिप्य गुरोः सकला और्ध्वदेहिकीः क्रियाः स्वयमेव निरवर्तयत् ।

अन्यदा भोजो दुर्वृत्तं पितरमसहमानो जिघांसुर्मातुलैः सह कान्यकुब्जमेत्य राजगृहद्वारे मालाकारेणोपायनीकृतं बीजपूरत्रयं गृहीत्वान्तः प्रविश्य वेश्यया सह प्रवरासनासीनं पितरं वेश्यां च तैरेव बीजपूरैर्गाढमाजघान । दृढप्रहाराभिहतौ तावुभावपि प्राणान् जहतुः । अथ मृतं क्रोष्टारमिव परेतं राजानं निर्जीवया वेश्यया सहापद्वारेण बहिर्निष्कासयामास । अथ प्रकृतयस्तं भोजं सिंहासने निवेश्याभिषिषिचुः । अन्येद्युः आमविहाराख्यं तीर्थं प्रणन्तुमुपगतो भोजो नन्नसूरिं गोविन्दसूरिं च तत्राचार्यकेऽवस्थाप्य नन्नसूरिं मोढेरे निवेश्य गोविन्दसूरिं स्वनिकटेऽवास्थापयत् । इत्थं भोजराज आमादप्यधिकं जैनं [illegible] चिरं [illegible] ।

बप्पभट्टिर्भद्रकीर्तिर्वादिकुञ्जरकेसरी ।
ब्रह्मचारी गजवरो राजपूजित इत्यपि ॥
विख्यातो विरुदैर्जैनशासनक्षीरसागरे ।
कौस्तुभः कृतसंस्थानः पुरुषोत्तमवक्षसि ॥
जयताज्जगतीपीठे धर्मकल्पद्रुमाङ्कुरः ।
इदानीमपि यन्नाममन्त्रो जाड्यविषापहः ॥

------

वैयाकरणमूर्धन्यमणिना कृष्णसूरिणा ।
चरितं बप्पभट्टीयं रचितं पठनोचितम् ॥

# परिशिष्ट ४

## आचार्य बप्पभट्टिसूरिविरचित तारागण

नंदउ सच्छंद - गई निम्मल - पय - पूर - गारव - महग्घो ।

जलहि - पडिरुद्ध - पसरो सुकईण सरस्सई - पवहो ॥ १ ॥

हिययाईं सज्जणाणं रंजइ कसिणेइ खलयण - मुहाई ।

सब्बं सुहासियं पि हु जाण नमो ताण सुकईणं ॥ २ ॥

उययमदोसंतरियं फुरिय - पयावं पि सेवियं सुहयं ।

नमिमो बिसमाइच्चस्स ठइय - तेयस्सि - निउरंबं ॥ ३ ॥

सुयणो थुइ - निरवेक्खो विवरीयं फलइ खलयण - पसंसा ।

सज्जण - खल - निरवेक्खं जह - ट्ठियाणं गुणाण नमो ॥ ४ ॥

गोयम - गोतुप्पण्णो भवप्पओ संकुउ त्ति नामेणं ।

ना ( या ) वलोय - गोट्ठी - छइल्ल - संसग्गि - निम्माओ ॥ ५ ॥

सद्द - गुणाहि नहाहि व अंतिल्ल - परिट्ठियत्थ - विहवाहिं ।

उच्चेउं गयवइणो गाहाओ तारयाओ व्व ॥ ६ ॥

तेणेस दोस - पुण्णो गुण - सय - संपुण्ण - कब्ब - रसियाण ।

आणाए पडिवद्धो कोसो तारागणो नाम ॥ ७ ॥

जेसिं जाणिहइ जणो सुहेण कोसम्मि संचरंतो हि ।

ताई सुभणिय - निहिणो कइणो नामाई वोच्छामि ॥ ८ ॥

जाणिहइ बप्पभट्टिं गुणाणुरायं च भद्दइत्तिं च ।

तह गयवइवइमायरियं च सेय - भिक्खुं च वाई च ॥ ९ ॥

कइ - बप्पभट्टिणो च्चिय अंतो - नाणं निहित्त - तेलोक्कं ।

इयरेण कह णु तीरइ भणिउं बद्धेक्क - कक्कडयं ॥ १० ॥

सो जयइ जएक्क - पहू तेलोक्कक्कंत - मज्झिमुद्देसं ।

नाणं जस्स विरायइ फलं व बद्धेक्क - कक्कडयं ॥ ११ ॥

भव - हुत्त - मणा दाढा - फड्क्कए दोहिं चेव गाहाहिं ।

अइसय - जय - संबद्धाहि वाइणा भुवणमइसइयं ॥ १२ ॥

भव - हुत्त - मण त्ति जहा -

पडिवण्ण - चरम - तणुणो अइसय - लेसं पि जस्स दट्ठूणं ।

भव - हुत्त - मणा जायंति जोइणो तं जिणं नमह ॥ १३ ॥

दाढा - फडक्कप त्ति जहा -

सो जयइ जस्स दाढा - फढक्कए उच्छलंत - निवडंतो ।

नीसासुग्गम - विगमेसु होइ गुलिओ व्व महि - गोलो ॥ १४ ॥

संखो साहय वट्टि त्ति वाइणा जह पसंसिया कइणो ।

तह मण्णे सो च्चिय तिहुयणे वि कइ - सद्दमुब्बहउ ॥ १५ ॥

संखो त्ति जहा -

णंदंतु ते कइंदा जेसिं अत्थो छणेण छिप्पंतो ।

संखो व्व निही तत्थेव जाइ सेसं पि घेत्तूण ॥ १६ ॥

साहय - षट्टि त्ति जहा -

ते कइणो पुहइ - परिट्ठिएसु - अत्थेसु जण - ण - दिट्ठेसु ।

साहय - साहिय - वट्टि व्व जाण वाणी परिट्ठाइ ॥ १७ ॥

दाढाओ गयवइणो निच्चिय - रइ रुंदहइ ँउ रेहंति ।

सज्जावेसालोयण - कव्व - विसुद्धि त्ति गाहाओ ॥ १८ ॥

सज्जावेसालोयण - महल्ल - कोऊहलेण जइ नडिओ ।

पर - वसणं दाणि खलस्स किं पि ता दुक्कह कहेसु ॥ १९ ॥

सुयणो दोसे वि गुणीकरेइ इयरो गुणे वि दूसेइ ।

कव्व - विसुद्धि - निमित्तं न - याणिमो कं समुल्लीमो ॥ २० ॥

ता पायलमहो च्चिय तइं असि - लट्ठीए महियलं जेउं ।

जालाहि वाइ विजियं जोइस - चक्कं तडि - निहेण ॥ २१ ॥

उय जोइंगण - परिगय - जलहर - पेरंत - घोलिरी विज्जू ।

निग्गय - फुलिंग - साणा - निसिज्जमाणी सिलट्ठि व्व ॥ २२ ॥

वडवानल - संवलियं मण्णे पीयं घणेहिं उयहि - जलं ।

जेण वमंति रसेता जालाउ इमे तडि - निहेण ॥ २३ ॥

कोलंबा केयारं जलहर - खल्ला य हारि - वडिओ य ।

नूणं गुणाणुराओ इमेहिं वयणेहिं चउ - वयणो । २४ ॥

विज्जु - कढिज्जंत - जला बलाय - फेणुग्गमा मसी - मइला ।

गज्जिय - गवण - पयहर - कोलंबा कलयलंति व्व ॥ २५ ॥

मारुय - तोत्तय - संचोइण्ण गाहेइ पाउस - हुडुंबी ।

नह - केयारं कसिणब्भ - मंडली - माहिसक्केण ॥ २६ ॥

जलहर - खल्ला -सित्ताए पाउसो वारिउ व्व धरणीए ।

गोमय - रस - दुआलिं व देइ हरियंकुरुप्पूरं ॥ २७ ॥

घण - पडलेहि छइज्जंतयाइं दट्ठूण जणवय - घराइं ।

छाएइ तहेव नहं पि पाउसो हारि - पडिओ व्व ॥ २८ ॥

नह - चंडिलं नह - कप्पर - गयणच्छिति य तिहा - कय - नहेहिं ।

आयरियस्स पएहिं हरिणो व्व जयं समक्कंतं ॥ २९ ॥

सुरचावोलवण - घणोह - भंडिया - निहिय - तडिगुण - छुरस्स ।

नह - चंडिलस्स रेहइ चंद - कला फलिह - सिलिय व्व ॥ ३० ॥

